काशीहिन्दूविश्वविद्यालयीयसंस्कृतसाहित्यानुसन्धानसमितेः चतुर्थं पुष्पम्

भरतमुनिविरचितम्

# नाट्यशास्त्रम्

## अभिनवगुप्तप्रणीताभिनवभारतीसहितम्

## तस्य द्वितीयो भागः

सम्पादकः

साहित्याचार्यमधुसूदनशास्त्री, एम० ए०

भूतपूर्व डीन; फेकल्टी आफ दि ओरियन्टल लर्निंग

काशीहिन्दूविश्वविद्यालयः

वाराणसी



# NATYASHASTRA

OF

# BHARATAMUNI

## PART SECOND

With the Commentary Abhinavabharati

*By*

ABHINAVA GUPTACHARYA

AND

Edited With an Original Profound Introduction and both Commentaries
Madhusudani, Balakreeda

*By*

Acharya Madhusudan Shastri *M.A.*

Ex-Dean, Faculty of the Oriental learning B.H.U.

1975

BANARAS HINDU UNIVERSITY

VARANASI

काशीहिन्दूविश्वविद्यालयीयसंस्कृतसाहित्यानुसन्धानसमितेः
पञ्चमं पुष्पम्

श्रीमद्भरतमुनिप्रणीतम्

# नाट्यशास्त्रम्

द्वितीयभागात्मकम्

श्रीमदाचार्याभिनवगुप्तोपज्ञाभिनवभारतीविवृत्या प्राचीनप्राच्यशाखाप्रमुखेन
श्रीमदाचार्यमधुसूदनशास्त्रिणा विरचिताभिः प्रौढभूमिका-
मधुसूदनीबालक्रीडाभिः समुद्भासितम्



सम्पादकः
साहित्याचार्य श्री मधुसूदनशास्त्री एम० ए०
एक्स डीन, फैकल्टी आफ दी ओरियण्टल लर्निंग, का० हि० वि० वि० वाराणसी।

# किमपि प्रास्ताविकम्

नाट्यशास्त्रशब्दं तदर्थञ्चाधिकृत्य अधिश्रित्य अनुयुज्य यत् कोहलादयो न्यभान्त्सुस्तत्सर्वं मया विदुषां विद्यार्थिनाञ्च पुरतो भेटितं (भया कान्त्या उज्ज्वलरीत्या इटितं प्रापितम्, ण्यन्तार्थस्यान्तर्भावितत्वात्) तेन पथा प्रासरीसरम् येनेदमीयं वृत्तं सर्वेभ्यः आप्रथमासप्तमाध्यायीयग्रन्थस्य भूमिकाभिधायां प्रस्तावनायां पर्यचीचयम्। इदानी नाट्यशास्त्रग्रन्थः कीदृश इति सम्भाल्यं वस्तु प्रचाकशीमि विदुष्मद्भ्यः।

दृश्यं रूपकं रूपं नाट्यमधिशय्य संदृब्धमिदं नाट्यशास्त्रं नाटकादिदशरूपकाणां स्वरूपस्य, तन्निर्माणोपयोगिनां सारगर्भितानां प्रत्यायकः उच्चस्तरीयः प्रामाणिको ग्रन्थः। अयं स्वविषये प्रतिदिशं परिपूर्णः। नाट्यक्षेत्रेऽयं सर्वतः प्रथमः मूर्धन्यश्चेति अखिले विश्वेऽस्मिन् कस्यामपि भाषायामेतादृशो मौलिको ग्रन्थो द्वितीयो नास्ति अद्वितीयः इति कथयितुं पार्येत।

यतो हि नाटकादिसम्बन्धिनां नाटयोत्पत्तिः। प्रेक्षागृहम्। नाट्यमण्डपलक्षणम्। मत्तवारिणी। करणानि। अङ्गहाराः। रेचकाः। रङ्गलक्षणम्। (रङ्गपीठशीर्षं रङ्गद्वाराणि। अन्तर्गीतम्। बहिर्गीतम्। निर्गीतम्। रसाः। भावाः। अभिनयभेदाः। अङ्गाभिनये शिरसस्त्रयोदश भेदाः। दृष्टयः। ताराकर्माणि नव। रसभेदेन च तानि दर्शनस्याष्टौ प्रकाराः। पुटकर्म। नासाकर्माणि। गण्डकर्माणि। अधरकर्माणि। चिबुककर्माणि। मुखकर्माणि। मुखरागः। ग्रीवाकर्माणि। नृत्तहस्ताः। त्रिपताकलक्षणम्। असंयुतहस्ताः। संयुतहस्ताः। चारीविधानम्। भौम्यश्चार्यः। आकाशिक्यः। मण्डलविकल्पनम्। गतिप्रचारः। आसनविधिः। कक्ष्याविभागः। छन्दांसि। लक्षणानि। भाषा तन्नियमः। काकुस्वरूपम्। दशानां रूपकाणां लक्षणानि। इतिवृत्तविभागः। सन्धयः तदङ्गानि। भारत्यादिवृत्तयः। आहार्याभिनयस्वरूपम्। आभ्यन्तरं बाह्यञ्च नाट्यम्। आलापाः। सुखमूलं स्त्रियः। स्त्रीणां भेदाः। नायिकाभेदाः। नायकभेदाः अलंकाराः। गुणाः रीतयः। प्रवृत्तयः। हावादयः। प्रकृतीयः। वस्तूनामभिनयः। सिद्धयः।

जातिकल्पनम्। ततातोद्याः। तालः। कलाः। लयः। ध्रुवाः। तज्जातयः। गुणदोषविचारः। पुष्कराद्याः। भूमिकाविकल्पः। इत्यादीनां विषयाणां। वैशद्येन गम्भीरतया निरूपकः विश्वस्य इतिहासेऽप्रतिमल्लः। विश्वेऽस्मिन्नधुना नाटकादीनां प्रचारः प्रसारः प्रकाशः विकासो वा यदस्ति तत्सर्वमस्यैव देनमस्ति। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।

अस्य विविधा विशेषताः चिरन्तन मनीषिणां मननस्य मुख्यो विषय आसीत्। अद्यापि इमा विशेषताः स्वस्मिन् स्वरूपे तादृश्यः सन्ति। भविष्यति च भविष्यन्ति। इमा इयत्यः एतादृश्यश्च गभीराः स्थिराः सन्ति। यावान् एषां

विचारः क्रियते तावत्य एव इमा प्रस्फुटिताः स्युः। भट्टलोल्लटभट्टनायकोद्भटाभिनवगुप्तादय उद्भटा पण्डिताः अस्य व्याख्यानानि निरमीयन्त। प्रगाढपाण्डित्यं पर्यचीचयंश्च तद्यपि गूढानां ग्रन्थग्रन्थिनां स्फोटनमद्यावधि सावशेषमेव प्रत्युत तेषां व्याख्याने इमा अधिकं चकासन्ते।

तदेतन्नाट्यं काव्यान्निष्पद्यते इति नाट्यशास्त्रस्य चतुर्थाध्याये सप्तत्युत्तर द्विशततमे श्लोके अभिनवगुप्ताचार्याः।

काव्यस्यैवादः सातिशयं माहात्म्यं यत्त एव भावा यान् प्रत्यक्षं दृष्ट्वाऽपि पश्यो न चमत्कृतो भवति ते तद्हृदये चमत्कारं नानुभावयन्ति ये काव्यशब्दोपस्थाप्यमाना अद्भुतं चमत्कारं जनयन्ति। ये अद्भुताः चमत्कारिणः प्रतीयन्ते। यैरध्येतुः छात्रवर्गस्य अभिरुचिर्वृद्धिर्मियात् अध्ययनपराङ्मुखा बालका अध्ययनोन्मुखाः स्युः अध्ययनप्रवृत्ताः स्युः। तदर्थं रसमयमाकर्षकं साधनं काव्यमेव। राष्ट्रस्य भाविने विकाशाय महोपयोगिनां यूनां ज्ञानपिपासा समृध्यतु। अध्ययनोत्तरमध्येतुश्चित्तपटले बहुविधविधानस्य, कल्याणपरम्पराणां सरलः सरसः हेतुवर्गः समृध्नोतु तथा तेषां स्वान्ते सत्यस्य बीजानि आरोहन्तु तस्मै सद्यः फलदायि कारणं काव्यम्।

इतिहासे ललितकलानां मुख्यं स्थानम्। तत्र कलासीमा काव्यमिति भर्तृहर्युक्तेः कलानां सीमा अवधि काव्यम्। तेन मूढमस्तिष्कानां संफुल्लनं शिक्षणीयानां विनेयानां बालकानां मनोवृत्तोस्तत्कालं परिवर्त्तनं च कर्त्तुं सुशकमेतदेव।

मानवं नवनवमुन्नेतुञ्च आन्तराः प्रेरिकाः शक्तयः कामपि शैलीमनु निरन्तरं विलसन्ति। येन परिवर्तिनीषु स्थितिषु सतीषु अपि मानवीयाश्चेतनाः प्रमुखां भूमिकामादातुं शक्नुवन्ति। परं मानवस्य सर्वाङ्गीणविकासोन्मुखकारिणीस्ता पास्पर्धितुमाहर्तुमसंख्या जटिलाः समस्या उपतिष्ठन्ति यासां समाधानं न केवलं मुष्किलमेव अपि तु ता मानवं विक्षिपन्ति। अवसरेऽस्मिन् सरलाभिः सरसाभिर्भावभङ्गीभिः कल्याणसोपानपरम्पराणामाविर्भावकानामुपायानां गुरुवदुपदेशकः अमृताप्यायकः बाह्या विश्रृंखलता दूरीकृत्य हृत्तन्त्रीनादं जारयितुं दृश्यं काव्यमेव। मानवे नवमां प्रमां चेतयितुं तस्य कल्पनाशक्तिमुर्वरां वरीतुं विलक्षणमसाधारणञ्च मेधासमेधने योगदानमादयितुं पूर्णं स्थिरं सद्यः परनिर्वृतिसम्बद्धकमनुल्लँघनीयोल्लाघदाने उत्कटं समर्थञ्च अनुष्ठानीयं काव्यमेव।

राष्ट्रसञ्जीवनीं उद्भूतिदायिनीं जीवनस्य समग्रतां सफलतां सर्ज्जनात्मकप्रवृत्तिं प्रति विशेषताया अनुकूलिनीभिः अभिमुखीभूताभिः आत्मीयतायाः भावनाभिः ओतप्रोतः विशालहृदयो गुरुर्वा सुहृद्वा नाट्यं काव्यमेव। उच्छखलस्य सर्वस्मिन् दुर्दण्डमुद्दिधीर्षोः विनयनीयस्य विद्यार्थिसार्थस्य कल्मषां बुद्धिं गङ्गामिव निर्मलां कलकलनादिनीं स्वाशयेन मधुरां प्रवाहेन निर्व्यूढां विधत्ते यत् तद् रूपकमेव। यतो हि सर्वः सुखं समीहते। सौन्दर्यं निरीक्षते। भावं बिभर्त्ति। रसास्वादने लोलुपः लालसस्तिष्ठति। तत्परतया परमानन्दं विन्दति। एतादृशं युववर्गमध्ययनेऽभिमुखं विधातुं नागरिकाणाञ्च स्तरमुन्नेतुं शास्त्राणां वास्तविकरहस्येषु प्रीणानां तथ्यकथासु च संमुखीकर्त्तुं जागरणस्य दिशामुद्बोधयितुं विकासप्रकाशछविं दर्शयितुं गंभीरान्

कठिनाँश्च विषयान् आस्वादनीयतया लघु प्रस्तोतुं, महत्वाकाक्षां समुद्बोदुं प्रभुः विभुः शम्भुः कालिदासादिमहाकवीनां पञ्चषाणामेव दृश्यं श्रव्यं पठ्यं काव्यमेव। यत्र हि मधुरं कलकलञ्च नदन्ती रसगङ्गा प्रवहति। यस्या जलमाचम्य आस्वाद्य आप्लाव्य मूढाः विक्षिप्ता सन्दिग्धाः भ्रान्ता युवानः विदुष्मन्तः चेतनाशालिनः वादविवादयोः प्रगल्भाः, निर्णतारः, प्रामाणिका विश्वसनीयाः सम्भ्रान्ताश्च नागरिका जायन्ते। तानि इमानि रसप्रधानास्ति काव्यानि। तेभ्यो हि रसप्रतीतिः स्थायिविभावव्यभिचारिभिर्भावैर्भवति। एतद्रसप्रत्यायकविभावादेरुपस्थापकानां शैली बहुभेदं बिभ्राणा विराजते सा चेयं नवविधाऽपि अनेकतां गाहते। तत्र प्रथमा सार्थक निरर्थक शब्दरूपं रागरागिनीप्रधानं श्रव्यं गीतकाव्यम्। द्वितीया शब्दप्रतिपाद्यार्थशुद्धार्थरूपमभिनेयप्रधानं दृश्यमभिनयात्मकं नाट्यम्। तृतीया शब्दसहकृतवर्ण्यमानार्थसम्पन्नं गद्यात्मकं कादम्बर्यादि, पद्यात्मकं रघुवंशादि, गद्यपद्योभयात्मकं नलचम्पूप्रभृति पठ्यं काव्यम्। चतुर्थी शब्दशून्यं केवलभावमयार्थरूपं विलक्षणरेखाभिः सम्पन्नं चित्रं काव्यश्रेणी बहिर्भूतम्। पञ्चमी लिपिस्वरूपं रेखानुगतं सार्थकशब्दप्रधानं चित्रं खड्गबन्धमुरजबन्धादि काव्यम्। षष्ठी उत्कीर्णनप्रधाना सप्तमी टंकणप्रधाना। अष्टमी स्थापत्यप्रधाना। नवमी स्थाप्या। एषु द्वितीयां शैलीमनुरुध्य प्रवर्त्तमानं नाट्यशास्त्रे प्रपञ्चितं दशरूपकम् तदिहास्माभिः संकेतितम्।

विदुषामाश्रवो

**मधुसूदनशास्त्री**

एक्स-डीन फैकल्टी आफ दी ओरियण्टल
लर्निंग, का० हि० वि० वि०
वाराणसी

# विषय-सूची

## अष्टमेऽध्याये अङ्गाभिनयः

## नवमेऽध्याये उपाङ्गाभिनयः

## दशमेऽध्याये-चारीविधानम्

## एकादशेऽध्याये मण्डलविकल्पनम्



## द्वादशेऽध्याये गतिप्रचारः

## त्रयोदशेऽध्याये कक्ष्याविभागविधानम्



## चतुर्दशेऽध्याये वागभिनये छन्दोविधानम्

## पञ्चदशेऽध्याये वागभिनये-वृत्तलक्षणम्

## षोडशेऽध्याये लक्षणालंकाराः

## सप्तदशेऽध्याये भाषालक्षणं तन्नियमलक्षणं काकुस्वरूपञ्च

## अष्टादशेऽध्यायेदशरूपलक्षणम्



———

## सम्मति

आचार्य श्री मधुसूदनशास्त्री जी के सम्पादकत्व में बड़ी सुन्दर शैलीं से ग्रन्थरत्न द्वय प्रकाशित हो रहे हैं। इसमें सहृदय विद्वानों के मनोरञ्जन की, विद्या के अनन्योपासक छात्र वृन्द के अध्ययन की एवं भावुक पाठकों के गुणार्जन की पूर्ण सामग्री है।

शास्त्री जी का पांडित्य शास्त्रीय पद्धति को परिष्कृत करने में सुचतुर है, विद्वानों को अपनी ओर आकृष्ट करने में दक्ष है एवं छात्रों की प्रतिभा को आप्यायन करने में रसायन है।

नाट्यशास्त्र के विषय में उसके निर्माण के समय से श्रीमदाचार्य अभिनव गुप्त के बाद शास्त्री जी का ही यह पहला प्रयत्न मेरी दृष्टि में आया है। रसगङ्गाधर के विषय में एक बात कहे बिना नहीं रहा जा सकता है कि इसके रचयिता पण्डितराज का प्रकाश या विकाश राजस्थान में ही जैसे हुआ उसी तरह इस दुरुह ग्रन्थ का उत्कृष्ट विवरण भी राजस्थान के ही विद्वान् के द्वारा हो रहा है यह हर्ष का विषय है। इसका प्रसार एवं प्रचार जनता में हो ऐसी विश्वनाथ से प्रार्थना है।

चैत्र व० १ भौम
सं० २०१२
नीची ब्रह्मपुरी काशी

महामहोपाध्याय
**आचार्य पं० गिरिधर शर्मा चतुर्वेदी**
जयपुराभिजन

## सम्मति

रसगङ्गाधर एवं नाट्यशास्त्र की विवृति के साक्षात्कार करने का सौभाग्य मुझे प्राप्त हुआ। यह देखकर और भी उल्लास हुआ कि इसके सर्वस्व मेरे अनन्य सहकारी परममित्र श्री पं० मधुसूदन जी साहित्याचार्य हैं। अब इसमें यह ध्रुव निष्पन्न है कि इसकी विचार चर्चा विमर्श संघटना अनुशीलन परम्परा अवश्य प्रामाणिक होगी।

क्योंकि इसके तत्त्वानुसन्धानकर्त्ता योग्य विद्वान् सद्गुरुशिक्षित परिश्रमी तथा सच्चे विद्याव्यसनी हैं। मुझे पूर्ण विश्वास है कि भरतनाट्य शास्त्र के व्याख्यान और परिशुद्ध पाठ प्रकाशित होंगे और रसगङ्गाधर की सुलझती हुई ग्रन्थियाँ उपलब्ध होंगी। मैं सम्मान भाजन विद्वानों और भावुक अध्येताओं का आकर्षण चाहता हूँ।

मा० शु० ६ शुक्रवार
सं० २०१२

**महादेव शास्त्री पाण्डेय**
सर्वतन्त्र स्वतन्त्र कवितार्किक चक्रवर्त्ती
प्रिंसिपल संस्कृत महाविद्यालय
B. H. U. बनारस

अथ अष्टमोऽध्यायः ।

ऋषय ऊचुः ।

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥१॥
नाट्ये कतिविधः कार्यः तज्ज्ञैरभिनयक्रमः ।
कथं वाभिनयो ह्येष कतिभेदस्तु कीर्तितः ॥२॥
सर्वमेतद्यथातत्त्वं भगवन् ! वक्तुमर्हसि ।
या यथाभिनयो यस्मिन् योक्तव्यः सिद्धिमिच्छता॥३॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान् प्रति ॥४॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ! ।
यस्मादभिनयो ह्येष विधिवत् समुदाहृतः ॥५॥

यदुक्तं चत्वारोऽभिनया इति तान् वर्णयिष्यामः । अत्राह अभिनय इति कस्मात् , अत्रोच्यते; अभीत्युपसर्गः णीञ् इति प्रापणार्थको धातुः । अस्याभिनीत्येवं व्यवस्थितस्य एरजित्यच्प्रत्ययान्तस्याभिनय इत्येवं रूपं सिद्धम् । एतच्च धात्वर्थानुवचनेनावधार्यं भवति ।

बालक्रीड़ा

ऋषि बोले । हे भगवन् ! आप की कृपा से भावों एवं रसों का समुत्थान यानी उद्गम क्रमशः सब सुना अब हम लोग जानना चाहते हैं कि ॥१॥

नाट्य के विद्वानों को या नाट्य के जानकार नटों को कितने प्रकार का और कैसे अभिनय करना चाहिए । और इसके कितने भेद हैं ॥२॥

नाट्य के विषय में सफलता चाहने वाले को जो अभिनय जिस समय और जिस प्रकार करना चाहिए । उस सब विषय को तात्त्विक दृष्टि से आप को कहना चाहिए ॥३॥

उन मुनियों के वचन को सुनकर भरत मुनि ने चार प्रकार के अभिनयों के विषय में कहा ॥४॥

क्यों इसको अभिनय कहते हैं इस तथ्य को हे तपस्वियो ! आप लोगों से विधि पूर्वक कहूँगा ॥५॥

ऐसा जो कहा कि अभिनय चार प्रकार के होते हैं । उनका वर्णन करूँगा । इस विषय में प्रश्न होता है कि अभिनय ऐसा क्यों कहते हैं । इस प्रसङ्ग में उत्तर देते हैं कि

## अत्र श्लोकौ

अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये ।
यस्मात्पदार्थान्नयति तस्मादभिनयः स्मृतः ॥६॥
विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥७॥
चतुर्विधश्चैव भवेन्नाट्यस्याभिनयो द्विजाः! ।
अनेकभेदबाहुल्यं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ॥८॥
आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राः ! चतुर्धा परिकल्पतः ॥९॥
सात्त्विकः पूर्वमुक्तस्तु भावैस्तु सहितो मया ।
अङ्गाभिनयमेवातो गदतो मे निबोधत ॥१०॥
त्रिविधस्त्वाङ्गिको दृष्टः शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥११॥

### बालक्रीड़ा

अभि यह उपसर्ग है और प्रापणाथक णीञ् धातु है । अभिनी इस रूप में व्यवस्थित'नी' धातु के अन्त में एरच् सूत्र से अच् प्रत्यय करने पर अभिनय यह रूप सिद्ध होता है । इस सब का निर्णय धात्वर्थ के अनुवचन के द्वारा होता ह । इस विषय में दो श्लोक हैं ।

अभिपूर्वक णीञ् धातु है जिसका निर्णय आभिमुख्य अर्थ में है । जब कि सामाजिकों के सम्मुख पदार्थों को प्राप्त कराते हैं इसलिए यह अभिनय कहा जाता है ॥६॥

जब कि प्रयोग के द्वारा नाना अर्थों की विशिष्ट भावना कराते हैं । इसलिए इसको अंग एवं उपाङ्ग शाखाओं से युक्त अभिनय माना है ॥७॥

हे द्विजो ! यद्यपि यहाँ पर नाटच अनेक भेदों से बहुत प्रकार का प्रतिष्ठित है तब भी नाटच का अभिनय चार ही प्रकार से होता है ॥८॥

हे विप्रो ! अभिनय को आंगिक वाचिक आहार्यिक एवं सात्विक इस चार प्रकार की परिकल्पनाओं से युक्त समझना चाहिए ॥९॥

इनमें भावों के सहित सात्विक अभिनय को मैंने पहिले कह दिया है । अतः अंगों के अभिनय को मैं कहता हूँ मुझसे आप लोग समझें ॥१०॥

आंगिक अभिनय शारीर मुखज तथा चेष्टाकृत तीन प्रकार का है । जो अंग एवं उपाङ्ग शाखाओं से संयुक्त है ॥११॥

शिरोहस्तकटीवक्षः पार्श्वपादसमन्वितः ।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः ॥१२॥
तस्य शिरोहस्तोरः पार्श्वकटीपादतः षडङ्गानि ।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥१३॥
तस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥१४॥
आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः सूचना भवेत् ।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥१५॥
मुखजेऽभिनये विप्रा ! नानाभावसमाश्रये ।
शिरसः प्रथमं कर्म गदतो मे निबोधत ॥१६॥
आकम्पितं कम्पितं च धूतं विधुतमेव च ।
परिवाहितमाधूतमवधूतं तथाञ्चितम् ॥१७॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् ।
लोलितं चैव विज्ञेयं त्रयोदशविधं शिरः ॥१८॥

बालक्रीड़ा

शिर हस्त कटी वक्षःस्थल पार्श्व एवं पाद रूपी अंग तथा प्रत्यंगों से युक्त षडङ्ग नाटचसंग्रह ह ॥१२॥

शिर हस्त उरः पार्श्व कटी और पाद ये उसके ६ अंग हैं और नेत्र भ्रू नासिका अधर कपोल एवं चिबुक ये ६ उसके उपाङ्ग हैं ॥१३॥

प्रयोग करने वालों को यहाँ पर इस अभिनय की शाखा नृत्त एवं अंकुर रूप वस्तुओं को जानना चाहिए ॥१४॥

जिनमें आंगिक अभिनय शाखा है। नाटच विषयक सूचना अंकुर है। और करणों के आश्रय पर अंगहारों से सम्पन्न होने वाला नृत्त है ॥१५॥

हे विप्रो ! नाना भावों का समाश्रय जिसमें होता है ऐसे मुखजन्य अभिनय के विषय में पहिले शिर के कर्म को कहता हूँ उसे आप लोग मुझसे समझें ॥१६॥

आकम्पित १ कम्पित २ धूत ३ विधुत ४ परिवाहित ५ आधूत ६ अवधूत ७ अञ्चित ८ निहञ्चित ९ परावृत्त १० उत्क्षिप्त ११ अधोगत १२ लोलित १३ यह तेरह प्रकार का शिर कर्म है ॥१७।१८॥

शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् ।
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥१९॥
ऋजुस्थितस्य चोर्ध्वाधः क्षेपादाकम्पितं भवेत् ।
बहुशश्चालितं यच्च तत्कम्पितमिहोच्यते ॥२०॥
संज्ञापदेशपृच्छासु स्वभावाभाषणे तथा ।
निर्देशे वाहने चैव भवेदाकम्पितं शिरः ॥२१॥
रोषे वितर्के विज्ञाने प्रतिज्ञातेऽथ तर्जने ।
व्याध्यमर्षणयोश्चैव शिरः कम्पितमिष्यते ॥२२॥
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते ।
द्रुतमारेचनादेतद्विधुतं तु भवेच्छिरः ॥२३॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥२४॥
शीतग्रस्ते भयार्त्ते च त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः ॥२५॥
पर्यायशः पार्श्वगतं शिरः स्यात् परिवाहितम् ।
आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तु यत् ॥२६॥

### बालक्रीड़ा

धीरे २ शिर का ऊपर एवं नीचे की तरफ ईषत् कम्पन आकम्पित हो जाता है । वही आकम्पित वार २ एवं जल्दी २ जब होता है तब कम्पित कहलाता है ॥१९॥

अन्य मत है कि सीधे सरल रूप में स्थित शिर का ऊपर एवं नीचे की तरफ संचालन आकम्पित है । और जो बहुत दफे संचालन है उसको यहाँ कम्पित कहते हैं ॥२०॥

कुछ पूछना हो या उपदेश देना हो या संकेत करना हो या समझाना हो या स्वाभाविक कुछ कहना हो या कुछ निर्देश करना हो अथवा कुछ पहुँचाना हो वहाँ आकम्पित शिर का अभिनय होता है ॥२१॥

रोष वितर्क विज्ञान प्रतिज्ञा तर्जन व्याधि एवं अमर्ष में शिर का कम्पित अभिनय इष्ट है ॥२२॥

जो तो धीरे २ शिर का रेचन ह वह धुत इष्ट है । किन्तु जो जल्दी २ शिर का ईषत् रेचन है वह विधुत है ॥२४॥

अवाञ्छित विषय में, विषाद, विस्मय, प्रत्यय, पागल की तरह झांकने, शून्य अवस्था एवं प्रतिषेध के समय में शिर का धुत अभिनय होता है ॥२५॥

शीत के प्रकोप से ग्रस्त, भय से स्वतः या किसी के द्वारा डराये जाने पर भीत, ज्वर से युक्त एवं मद्य पीने वाले व्यक्ति के अभिनय के समय में शिर को विधुत करना चाहि ।२६।

साधने विस्मये हर्षे स्मिते चामर्षिते तथा ।
विचारे विहृते चैव लीलायां परिवाहितम् ।।२७।।
गर्वेच्छादर्शने चैव पार्श्वस्थोर्ध्वनिरीक्षणे ।
आधूतं तु शिरो ज्ञेयमात्मसम्भवनादिषु ।।२८।।
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
सन्देशावाहनालापसंज्ञादिषु तदिष्यते ।।२९।।
किञ्चित् पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मत्ते सचिन्ते दुःखिते भवेत् ।।३०।।
उत्क्षिप्तांसावसक्तं यत्कुञ्चितभ्रूलतं शिरः ।
निहञ्चितं तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् ।।३१।।
गर्वे विलासे ललिते बिब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते स्तम्भमाने निहञ्चितम् ।।३२।।
परावृत्तानुकरणात् परावृत्तं शिरः स्मृतम् ।
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ।।३३।।

बालक्रीड़ा

पारी २ से शिर को पार्श्व में ले जाना परिवाहित कहलाता है। आधूत उसको कहते ह जिसको एक वार तिरछा कर के घुमा दिया गया हो ।।२६।।

साधन की अवस्था में तथा विस्मय हर्ष स्मरण अमर्ष विचार विहृत (उच्चारण) और लीला करते समय में परिवाहित नामक अभिनय होता है ।।२७।।

गर्व के दिखाने इच्छा के प्रकट करने बगल में झाकने ऊपर की तरफ ताकने एवं आत्मसम्भावना के समय में आधूत शिर का अभिनय होता है ।।२८।।

जिसका एक वार नीचे की तरफ आक्षेप किया जाता है उस शिर को अवधूत कहते हैं। उसका अभिनय सन्देश को पहुँचाने वार्तालाप के प्रसंग एवं संकेत करने में इष्ट है ।।२९।।

जिस ग्रीवा को पार्श्व में नत करे उस शिर को अञ्चित समझना चाहिए। इसका अभिनय व्याधि युक्त मूर्च्छित मत्त चिन्तित एवं दुःखित व्यक्ति के द्वारा होता है ।।३०।।

जहाँ शिर ऊँचे उठे हुए कन्धे में आसक्त हो और भ्रूलता कुछ कुञ्चित हो उसको निहञ्चित समझना चाहिए। स्त्रियों के सम्बन्ध में इसका प्रयोग किया जाता है ।।३१।।

गर्व विलास ललित विव्वोक किलकिञ्चित, मोट्टायित कुट्टमित एवं स्तम्भ नामक सात्विक भाव से युक्त मान के समय में निहञ्चित का अभिनय किया जाता है ।।३२।।

पराङ मुख होकर वृत्त अर्थात् घूमे हुए का अनुकरण करने से शिर को परावृत्त माना है। पीछे की तरफ देखने के समय मुख को घुमाने में इसका अभिनय होता है ।।३३।।

उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यास्त्रयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥३४॥
अधोमुखं स्थितं चापि बुधाः प्राहुरधोगतम् ।
लज्जायां च प्रणामे च दुःखे चाधोगतं शिरः ॥३५॥
सर्वतो लोलनाच्चापि शिरः स्यात् परिलोलितम् ।
मूर्च्छाव्याधिमदावेगग्रहनिद्रादिषु स्मृतम् ॥३६॥
ऋजुस्वभावसंस्थानं प्राकृतं तु स्वभावजम् ।
मंगल्याध्ययनध्यानस्वभावजयकर्मसु ॥३७॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥३८॥
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥३९॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥४०॥

बालक्रीड़ा

उत्क्षिप्त उसको जानना चाहिए जहाँ शिर उन्मुख अवस्थित हो । इसका अभिनय उस समय होता है जब उन्नत होकर दिव्य अस्त्र का प्रयोग करना हो ॥३४॥

अधोमुख स्थित शिर को अधोगत कहते हैं इस अधोगत शिर का अभिनय लज्जा प्रणाम एवं दुःख के समय में करना चाहिए ॥३५॥

सब दिशाओं में या सब तरफ शिर को लोलन करना हिलाना डुलाना परिलोलित होता है । इसका अभिनय मर्च्छा, व्याधि, मद के आवेग एवं ग्रहगृहीत की निद्रा के समय में माना है ॥३६॥

सरल स्वभाव में संस्थान प्राकृत है स्वभावज है । इसका अभिनय मांगलिक काय, अध्ययन ध्यान एवं स्वाभाविक कार्यों में होता है ॥३७॥

इनसे अन्य बहुत से भेद लौकिक अभिनय के अनुसार हैं । उनका अभिनय लोक स्वभाव के द्वारा प्रयोक्ताओं को करना चाहिए ॥३८॥

ये तेरह प्रकार के शिर और उनके कर्म्म मैंने आप लोगों को कहे । अब इसके बाद दृष्टियों के लक्षणों को कहूँगा ॥३९॥

कान्ता १ भयानका २ हास्या ३ करुणा ४ अद्भुता ५ रौद्री ६ वीरा ७ बीभत्सा ८ ये (आठ) रस दृष्टियाँ हैं ॥४०॥

स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥४१॥
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा।
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥४२॥
कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा।
वितर्किताऽर्धमुकुला विभ्रान्ता विप्लुता तथा ॥४३॥
आकेकरा विकोशा च त्रस्ताथ मदिरा तथा।
षट्त्रिंशद् दृष्टयो ह्येता नामतोऽभिहिता मया ॥४४॥
अस्य दृष्टिविधानस्य नानाभावरसाश्रयम्।
लक्षणं सम्प्रवक्ष्यामि यथाकर्म प्रयोगतः ॥४५॥
हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥४६॥
प्रोद्वृत्तनिष्टब्धपुटा प्रस्फुरद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥४७॥
क्रमादाकुञ्चितपुटा विभ्रान्ताकुलतारका।
हास्या दृष्टिस्तु कर्त्तव्या कुहकाभिनयं प्रति ॥४८॥

## बालक्रीड़ा

स्निग्धा ९ हृष्टा १० दीना ११ क्रुद्धा १२ दृप्ता १३ भयान्विता १४ जुगप्सिता १५ विस्मिता १६ ये (आठ) दृष्टियाँ स्थायी भावों के विषय में होती हैं ॥४१॥

शून्या १७ मलिना १८ श्रान्ता १९ लज्ज्वान्विता २० ग्लाना २१ शंकिता २२ विषण्णा २३ मुकुला २४ कुञ्चिता २५ अभितप्ता २६ जिह्मा २७ ललिता २८ वितर्किता २९ अर्धमुकुला ३० विभ्रान्ता ३१ विप्लुता ३२ आकेकरा ३३ विकोशा ३४ त्रस्ता ३५ और मदिरा ३६ इन (छवीस) और पहिले वाली १६ को मिलाकर षट् त्रिशत् दृष्टियों को नाम से मैंने कहा ॥४२।४३।४४॥

अब दृष्टियों के इस विधान का नाना भावों एवं रसों के अनुकूल लक्षण और प्रयोग के अनुसार कर्म को कहूँगा ॥४५॥

शृंगार में हर्ष एवं प्रसाद से पैदा होने वाली अत्यन्त कान्त सुन्दर कामोद्रेक कारिणी और भ्रूक्षेप तथा कटाक्षों से युक्त दृष्टि इष्ट है ॥४६॥

जिसमें पुट पलक प्रोद्वृत्त यानी अत्यन्त ऊपर को उठे हुए तथा निष्टब्ध निश्चल हों और वृत्त गोल २ तारक पुतलियाँ प्रस्फुरत् चञ्चल हों ऐसी महाभयानक भीता दृष्टि को भयानक रस में समझना चाहिए ॥४७॥

जिसमें पलक आकुञ्चित यानी झुके हुए तथा पुतलियाँ अतिशय भ्रान्त घूमती हुई

पतितोर्ध्वपुटा साश्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥४९॥
या त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥५०॥
क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
भ्रुकुटीकुटिला दृष्टिः रौद्रे रौद्री रसा स्मृता ॥५१॥
दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥५२॥
निकुञ्चितपुटापाङ्गा घृणोपप्लुततारका ।
मन्थरश्लिष्टपक्ष्मा च बीभत्सा दृष्टिरिष्यते ॥५३॥
नासाग्रसक्ता निमिषा तथाधोभागचारिणी ।
आकेकरपुटा शान्ते शान्ता दृष्टिर्भवेदसौ ॥५४॥

बालक्रीड़ा

अतएव आकुल हों ऐसी हास्या दृष्टि को कुहक मायावी बाजीगर जालिया विस्मापक के विषय में करनी चाहिए ॥४८॥

जिसमें ऊपर की पलक नीचे गिरी हुई हो आसुओं से डबडबाई हुई हो पुतलियाँ दीन अत एव शिथिल हों ऐसी नासिका के अग्रभाग में अनुगत करुणा दृष्टि करुण रस में होती है ॥४९॥

जिसमें पक्ष वारुणियों के अग्रभाग आकुञ्चित कुछ झुके हुए तथा आश्चर्य से तारक उद्धत्त हो ऐसी प्रान्त कटाक्ष में खिली हुई सौम्या अद्भुता दृष्टि अद्भुत रस में होती है ॥५०॥

जो क्रूरा भयंकरा रूक्षा स्नेह रहिता अरुणा रक्त हों तथा जिसमें पलक एवं तारे उद्धत एवं निष्टब्ध हो तथा भृकुटियाँ कुटिल हौ ऐसी रौद्री दृष्टि रौद्र रस में मानी है ॥५१॥

जो दीप्ता विकसिता क्षुब्धा एवं गम्भीरा तथा समताराओं वाली और जिसमें मध्य भाग की पुतलियाँ खिली हुई हों ऐसी वीरा दृष्टि वीर रस में आश्रय पाती है ॥५२॥

जिसमें पलक एवं अपाङ्ग कटाक्ष निकुञ्चित यानी सिकड़े हुए हों तारे घृणा से उपप्लुत यानी व्याप्त हों और पक्ष्म (वारुणियाँ) मन्थर शिथिल एवं श्लिष्ट परस्पर में चिपके हुए हों ऐसी बीभत्सा दृष्टि बीभत्स रस में होती हैं ॥५३॥

नासा के अग्रभाग में आसक्त निमेषयुक्त नीचे की ओर जाने वाली अत एव आकेकर पुटा मीलितार्ध पलका यानी जिसमें पलकें आधी मीची हुई हो एसी शान्ता दृष्टि शान्त रस में होनी चाहिए ॥५४॥

रसजा दृष्टयो ह्येता विज्ञेया लक्षणान्विता ।
अतः परं प्रवक्ष्यामि स्थायिभावसमाश्रयाः ॥५५॥
व्याकोशमध्या मधुरा स्मेरताराभिलाषिणी ।
सानन्दाश्रुप्लुता दृष्टिः स्निग्धेयं रतिभावजा ॥५६॥
चला हसितगर्भा च विशत्तारानिमेषिणी ।
किञ्चिदाकुञ्चिता दृष्टिः हृष्टा हासे प्रकीर्तिता ॥५७॥
ईषत्स्रस्तोत्तरपुटा किञ्चित्संरब्धतारका ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥५८॥
रूक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते ॥५९॥
संस्थिते तारके यस्याः स्थिता विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ॥६०॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥६१॥

बालक्रीड़ा

ऊपरि निर्दिष्ट लक्षणों से सम्पन्न इन दृष्टियों को रस से पैदा होने वाली समझना चाहिए । अब इसके बाद स्थायी भावों के आश्रय में रहने वाली दृष्टियों को कहूँगा ॥५६॥

मध्य भाग में खिली हुई, मधुरा, ताराओं के स्मेर भाव से प्रेम की अभिलाषा को द्योतन करने वाली और आनन्द से उद्भूत आसुओं से आलुप्त स्निग्धा दृष्टि रति भाव से पैदा होती है ॥५७॥

चंचल, हँसी से भरी हुई तथा जिसमें कनीनिकाएँ भीतर की तरफ घुसी हुई होकर निमेष रहित हों ऐसी कुछ आकुञ्चन मीलन से युक्त हृष्टा दृष्टि हास स्थायी भाव में कही जाती है ॥५८॥

जिसमें ऊपर वाली पलकें कुछ गिरी हुई हों कनीनिका कुछ बन्द हो यानी चञ्चलता रहित हों ऐसी मन्द संचार से युक्त दीना दृष्टि शोक भाव में इष्ट है ॥५८॥

रूक्षा स्नेह शून्या स्थिरा चाञ्चल्य रहिता ऊपर को उठे हुए पलकों वाली पूरे तौर से स्तब्ध एवं उद्धत तारकाओं से युक्ता एवं कुटिल जिसमें भौंहे हो ऐसी क्रुद्धा दृष्टि का विधान क्रोध में होता है ॥५९॥

जिसके तारे पुतलियाँ संस्थित हों अत एव स्थिरा विकसिता तथा सत्व के उद्रेक वाली दृप्ता दृष्टि उत्साह से पैदा होती है ॥६०॥

जिसमें उभय पलक विस्फारित हों ताराओं का भय से कम्पन होता हो और मध्यभाग जिसका आगे को निकला हुआ रहे ऐसी भयान्विता दृष्टि भय भाव में होती है ॥६१॥

संकोचितपुटन्यासा दृष्टिर्मीलिततारका ।
पक्ष्मोद्देशात् समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥६२॥

भृशमुद्वृत्ततारा च हृष्टोभययपुटान्विता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥६३॥

स्थायिभावाश्रया ह्येता लक्षिता दृष्टयो मया ।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम् ॥६४॥

समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थाग्राहिणी क्षामा शून्या दृष्टिः प्रकीर्तिता ॥६५॥

प्रस्पन्दमानपक्ष्माग्रा नात्यर्थमुकुलैः पुटैः ।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका ॥६६॥

श्रमप्रम्लापितपुटा क्षामा कुञ्चितलोचना ।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥६७॥

### बालक्रीड़ा

जिसमें पलकों की झपक थोड़ी २ होती हो और ताराएँ मीलित रहे तथा वारुणियों के स्थान उद्विग्न विचलित प्रतीत होती हो ऐसी जुगुप्सिता दृष्टि जुगुप्सा स्थायी भाव में होता है ॥६२॥

जिसमें ताराएँ अत्यन्त उद्वत्त हो और दोनों ऊपर एवं नीचे की पलकें हृष्ट माने खुली हुई रहें अतः समान भाव से विकसित रहने वाली विस्मिता दृष्टि विस्मय में मानी है ॥६३॥

ये स्थायीं भावों के आश्रय में रहने वाली दृष्टियाँ मैंने आप लोगों को लक्षणों के द्वारा बतयाई। अब सञ्चारी भावों के आश्रय से होने वाली दृष्टियों के लक्षणो को कहूँगा ॥६४॥

जिसमें तारा आखों की पुतलियाँ और पुट पलक सम हों अर्थात् दोनों की क्रिया अथवा स्वरूप समान भाव में हो अत एव निष्कम्पा यानी स्थिरा और बाह्य अन्तःकरण से बाहर लोक में दिखाई पड़ने वाले पदार्थ को नहीं ग्रहण करने वाली अत एव शून्यदर्शना एवं कमजोर दृष्टि को शून्या दृष्टि कहते हैं ॥६५॥

जिसमें पक्ष्म वारुणियों के अग्रभाग हिलते हों, आखों के पलक अत्यन्त मुकुलित मीलित नहीं हों, अपाङ्ग नेत्र प्रान्त कान्तिरहित हो मलिन हो ऐसी विस्मित ताराओं वाली दृष्टि मलिन होती है ॥६६॥

श्रम के कारण जिसमें पुट म्लान हों क्षामा कमजोर अर्थात् दूर तक नहीं देख पाती हो एवं तारे नीचे की तरफ गिर हुए हों ऐसी सन्ना अर्थात् अलसचारिणी दृष्टि श्रान्ता कहलाती है ॥६७॥

किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया ।
त्रपाधोमुखतारा च दृष्टिर्लज्जान्विता तु सा ॥६८॥
ग्लानभ्रुपुटपक्ष्मा या शिथिला मन्दचारिणी ।
क्लमप्रवृष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥६९॥
किञ्चिच्चला स्थिरा किञ्चिदुत्तुङ्गा तिर्यगायता ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥७०॥
विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी ।
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥७१॥
स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता ।
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥७२॥
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥७३॥

बालक्रीड़ा

जिसमें पक्ष्मों के अग्रभाग कुछ २ अञ्चित रहे इसका मतलब हुआ कि ऊपर एवं नीचे की पलकों की वारुणियाँ एक दूसरे के अभिमुख में रहें यह परम्पराभिमुखीभाव भी तभी होगा जब ऊपर वाली पलक नीचे की तरफ गिरी हुई रहेंगी । और तारायें पुतलियाँ अधोमुख जिसमें रहें ऐसी दृष्टि लज्जान्विता लज्जिता दृष्टि होती है ॥६८॥

जिसमें भोंहे पलकें एवं वारुणियां म्लान होवें और तारायें घसी हुई रहे ऐसी शिथिल एवं मन्द चारिणी दृष्टि ग्लाना दृष्टि मानी गई है ॥६९॥

जो कुछ चञ्चल और कुछ स्थिर कुछ उत्तुङ्ग और कुछ तिरछी फैली हुई । गूढ़ यानी गहरा अवलोकन करने वाली एवं तारायें जिसमें चकित रहें यानी देखने के लिए प्रस्तुत हुई किन्तु शीघ्र ही उससे लौट आवे ऐसी दृष्टि शंकिता मानी गई है ॥७०॥

जिसमें दोनों पुट विस्तीर्ण रहें, अपाङ्ग नेत्रप्रान्त पर्यस्त पतित इधर उधर फैले हुए या गिरे हुए रहें और तारायें स्तब्ध रहे ऐसी निमेष वाली विषादिनी विषण्णा दृष्टि को करना चाहिए ॥७१॥

जिसमें पक्ष्म के अग्र भाग स्फुरित एवं परस्पर में श्लिष्ट यानी मिले हुए रहें ऊपर वाली पलक अञ्चित रहे, तारायें पुतलियाँ हृद्य पदार्थों के अनुभव से होने वाले सुख से विश्रान्त रहें ऐसी दृष्टि मुकुला नाम से इष्ट है ॥७२॥

जिसमें पक्ष्मों के अग्रभाग पुट एवं तारायें ईषत् २ कुञ्चित रहे वह दृष्टि कुञ्चिता कहलाती है ॥७३॥

मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥७४॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥७५॥
मधुराकुञ्चितान्ता च सभ्रूक्षेपाऽथ सस्मिता ।
सममन्थाविकारा च दृष्टिः सा ललिता स्मृता ॥७६॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरिष्टा वितर्किता ॥७७॥
अर्धव्याकोशपक्ष्मा च ह्लादार्धमुकुलैः पुटैः ।
स्मितार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका ॥७८॥
अनवस्थिततारा च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥७९॥
पुटौ प्रस्फुरितौ यत्र निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥८०॥

### बालक्रीड़ा

जिसमें तारायें मन्द रहे, पुट प्रचलित रहें ऐसी सन्ताप से उपप्लुत एवं व्यथा से युक्त दृष्टि अभितप्ता होती है ॥७४॥

जिसमें पुट लम्बे होते हुए भी कुञ्चित रहें ऐसी धीरे २ निरीक्षण करने वाली निगूढा एवं गूढ ताराओं वाली दृष्टि जिह्मा दृष्टि कहलाती है ॥७५॥

जिसमें नेत्र प्रान्त मधुरता को लिए हुए ईषत् कुञ्चित रहें और भ्रुओं के क्षेप के साथ २ स्मित रहें ऐसी काम सम्बन्धी विकारों वाली दृष्टि ललिता दृष्टि कहलाती है ॥७६॥

जिसमें पुट उद्वर्तित यानी उद्भ्रान्त रहें तथा तारा उत्फुल्ल विकसित रहें ऐसी अधः संचार वाली नीचे की तरफ ताकने वाली दृष्टि वितर्किता नाम से इष्ट है ॥७७॥

जिसमें पक्ष्म आधे खिले हुए हों पुट आधे मुकुलित रहें ऐसी कुछ २ लुलित उद्भ्रान्त ताराओं वाली दृष्टि अर्ध मुकुला दृष्टि होती है ॥७८॥

जिसमें तारा विभ्रान्त यानी अनवस्थित रहें एवं विभ्रान्त यानी विरामरहित अत एव आकुल निरीक्षण रहे ऐसी मध्य भाग में विस्तीर्ण एवं उत्फुल्ल दृष्टि विभ्रान्ता कहलाती है ॥७९॥

जिसमें पुट क्रमशः पहले प्रस्फुरित स्तब्ध फिर पतित रहें ऐसी उद्वृत्त ताराओं वाली दृष्टि विप्लुता होती है ॥८०॥

आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥८१॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरुच्यते ॥८२॥
त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका ।
सन्त्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ॥८३॥
व्याघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिविकसितापाङ्गा मदिरा तरुणे मदे ॥८४॥
किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका ।
तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ॥८५॥
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥८६॥
इत्येवं लक्षिता ह्येता षट्त्रिंशद् दृष्टयो मया ।
रसजा भावजाश्चासां विनियोगं निबोधत ॥८७॥

बालक्रीड़ा

जिसमें पुट एवं अपाङ्ग ईषत् कुञ्चित रहें और तारा वार २ व्यावर्तित होती रहें ऐसी अर्ध निमेष वाली संगता दृष्टि आकेकरा मानी गई है ॥८१॥

जिसमें दोनों पुट कोश कलि के आकार में हो वार २ पलके झंपती हों एवं तारा अनवस्थित चंचल हों ऐसी प्रोत्फुल्ला दृष्टि विकोशा कहलाती है ॥८२॥

जिसमें पुट उद्वृत्त हों तारा पुतलियाँ उत्कम्पित हों और मध्यभाग उत्फुल्ल हो ऐसी दृष्टि त्रस्ता का उदाहरण है ॥८३॥

मदिरा नाम वाली दृष्टि तीन प्रकार की है जिसका प्रयोग तरुण मध्य एवं अधम मदों में होता है। उनके लक्षण भिन्न २ होते हैं। इसमें तीव्र उत्कट मध्य अधम मद होता है जो अधम पुरुष में रहता है।

जिसमें अपाङ्ग विकसित हों देखने की शैली ताकने का प्रकार क्षीण हो और पुतलियाँ व्याघूर्णमान हों ऐसी मदिरा दृष्टि तरुण मद में होती है ॥८४॥

जिसमें पुट कुछ २ कुञ्चित हों तारा अनवस्थित घूमने वाले हों और वारुनियाँ हिलती हुई हों ऐसी मदिरा दृष्टि मध्यममद में होती है ॥८५॥

जिसमें कभी निमेष हो कभी निमेष नहीं हों अत एव बीच २ में पुतलियाँ दिखाई पड़ती हों ऐसी नीचे की तरफ ताकने वाली मदिरा दृष्टि अधम मद में होती है ॥८६॥

इस प्रकार रसों एवं भावों से पैदा होने वाली ३६ दृष्टियों के लक्षण मैंने बतलाये। या दृष्टियाँ बतलाई। अब इनके विनियोग या उपयोग को समझें ॥८७॥

रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
शृणुत व्यभिचारिण्यः सञ्चारिषु यथा हि ताः ॥८८॥

शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥८६॥

श्रान्ता श्रमार्तौ स्वेदे च लज्जायां लज्जिता तथा ।
अपस्मारे तथा व्याधौ ग्लाने ग्लाना विधीयते ॥६०॥

शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकुला दृष्टिरिष्यते ॥६१॥

कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥६२॥

जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृता तर्के च तर्किता ॥६३॥

आह्लादेष्वर्धमुकुला गन्धाद्याघ्राणजेष्वपि ।
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा ॥६४॥

### बालक्रीड़ा

इन दृष्टियों में रस दृष्टियों का रसों में ही स्थायीभावीय दृष्टियों का स्थायिभावों में ही व्यभिचारिणी दृष्टियों का व्यभिचारियों में ही जैसे प्रयोग होता है उसको सुनें ॥८८॥

शून्या दृष्टि का चिन्ता व्यभिचारी भाव तथा स्तम्भ सात्विक भाव में और मलिना दृष्टि का निर्वेद व्यभिचारी भाव और वैवर्ण्य सात्विक भाव में विधान किया जाता है ।८९।

श्रम जनित आर्ति और स्वेद पसीने के आने के समय में श्रान्ता का तथा लज्जा में लज्जिता का । और अपस्मार व्याधि तथा म्लानावस्था से युक्त पुरुष में म्लाना विहित है ॥९०॥

शंका के समय में शंकिता, विषाद के लिए विषादिनी और निद्रा स्वप्न एवं सुखमय या सुखजनक अवस्थाओं में मुकुला दृष्टि इष्ट है ॥९१॥

असूयित अनिष्ट दुष्प्रेक्ष्य या दुष्प्रेक्षा एवं आखों की पीड़ा में कुञ्चिता दृष्टि का निर्वेद तथा अभिघात एवं अभिताप में अभितप्ता का ॥९२॥

असूया जडता एवं आलस्य में जिह्मा का धृति और हर्ष में ललिता का स्मृति और तर्क में तर्किता का गन्धादि के आघ्राणादि से होने वाले आनन्द में अर्ध मुकुला का । आवेग संभ्रम एवं विभ्रम में विभ्रान्ता का ॥९३।९४॥

विप्लुता चापलोन्माददुःखार्तिमरणादिषु ।
आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ॥९५॥

विबोधामर्षगर्वौग्र्यमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भवेद् दृष्टिर्मदिरा च मदेष्विति ॥९६॥

षट्त्रिंशद् दृष्टयो ह्येता यथावत् प्रतिपादिताः ।
रसजानां तु दृष्टीनां भावजानां तथैव च ॥९७॥

तारापुटभ्रुवां कर्म गदतो मे निबोधत ।
भ्रमणं वलनं पातश्चलनं सम्प्रवेशनम् ॥९८॥

विवर्तनं समुद्वृत्तं निष्कामः प्राकृतं तथा ।
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ॥९९॥

वलनं गमनं त्र्यस्रं पातनं स्रस्तता तथा ।
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् ॥१००॥

विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः ।
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् ॥१०१॥

अथैषां रसभावेषु विनियोगं निबोधत ।
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः ॥१०२॥

### बालक्रीड़ा

चपलता उन्माद दुःख पीड़ा एवं मरण आदि में विप्लुता का दुरालोक बड़े कष्ट से देखने लायक पदार्थ एवं विच्छिन्न वस्तु के देखने में आकेकरा का ॥९५॥

जागरण अमर्ष गर्व उग्रता एवं मति में विकोशिता का, त्रास में त्रस्ता का त्रिविध मद में मदिरा का विनियोग करना चाहिए ॥९६॥

इन छत्तीस दृष्टियों का यथावत् प्रतिपादन किया । अब रसदृष्टि एवं भावदृष्टियों के सम्बन्धी ताराओं पुटों तथा भ्रुवों के कर्म को कहता हूँ आपलोग समझें ॥९७॥

भ्रमण वलन पातन चलन सम्प्रवेशन विवर्त्तन समुद्वर्त्तन निष्क्रामण एवं प्राकरण ।९८।

पुटों के भीतर मण्डलाकार से या में भ्रमण तारों की आवृत्ति है । गमन वलन है । लड़खड़ा जाना पतन है पात है । कम्पन चलन है । प्रवेश करना अन्तः प्रवेशन है । कटाक्षव्याक्षेप विवर्तन है । समुन्नति समुद्वृत्त है । निर्गम निष्क्रामण है । स्वभाव से पैदा होने वाला प्राकृत कहलाता है ॥९९:१००।१०१।१०२॥

निष्क्रामणं संवलनं कर्तव्यं तु भयानके ।
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते ॥१०३॥
पातनं करुणे कार्यं निष्क्रामणमथाद्भुते ।
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् ॥१०४॥
स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् ।
एवं सर्वेषु भावेषु ताराकर्म नियोजयेत् ॥१०५॥
अथाऽत्रैव प्रवक्ष्यामः प्रकारं दर्शनस्य तु ।
समं साच्यनुवृत्ते च ह्यालोकितविलोकिते ॥१०६॥
प्रलोकितोल्लोकिते चाप्यलोवकितमेव च ।
समतारं च सौम्यं च यद् दृष्टं तत् समं स्मृतम् ॥१०७॥
पक्ष्मान्तर्गततारं च त्र्यस्रं साचिकृतं तु तत् ।
रूपनिर्वापण(वर्णना) युक्तमनुवृत्तमिति स्फुटम् ॥१०८॥
सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम् ॥१०९॥
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ।
इत्येष दर्शनविधिः सर्वभावरसाश्रयः ॥११०॥

## बालक्रीड़ा

अब इनके रस एवं भावों में विनियीग को समझो । भ्रमण चलन उद्वर्त्तन एवं निष्क्रामण का वीर एवं रौद्र में । निष्क्रामण और सम्वलन का भयानक में । प्रवेशन का हास्य एवं बीभत्स में । करुण में पातन का । निष्क्रामण का अद्‌भुत में : प्राकृत का शेष भावों में । विवर्त्तन का शृंगार में । ये कर्म जनता की क्रिया के अनुसार स्वभावसिद्ध हैं । इस प्रकार सभी भावों में भी ताराओं के कर्म का विनियोग करे ।।१०३।१०४।१०५।१०६।।

अब यहाँ पर दर्शन की शैलियों को कहूँगा । सम १ साचि २ अनुवृत्त ३ आलोकित ४ विलोकित ६ प्रविलोकित ७ उल्लोकित ८ अवलोकित ९ ये नौ दर्शन ह ।।१०७।।

जिसमें तारायें सम हो ऐसा सौम्य दर्शन सम कहलाता है । तिरछी पक्ष्म के भीतर तारा जहाँ हो वह साचि होता है । रूपों स्वरूपों के निर्वर्णनाओं का योग जहाँ रहे वह अनुवृत्त है । कवियों के अन्तःकरणों में वर्णनीय रूपों की सम्पूर्ण क्रिया को देखने की जो चिरकाल से मौजूद अत एव स्थिर इच्छा है उसका नाम निर्वर्णना है । निर्वर्णना क्रियाकार्त्स्न्यदिदृक्षान्तश्चिरं स्थिरा ।।१०८।१०९।।

अकस्मात् दर्शन को आलोकित कहते हैं । पृष्ठभाग से पीछे की ओर से देखने को विलोकित, वगल से ताकने को प्रलोकित, ऊपर की तरफ देखने को उल्लोकित और नीचे

ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ।
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ॥१११॥
विवर्तितं प्रस्फुरितं पिहितं सविताडितम् ।
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ॥११२॥
समागतो निमेषः स्यादायामः प्रसृतं भवेत् ।
आकुञ्चितं कुञ्चितं स्यात् समं स्वभाविकं स्मृतम् ॥११३॥
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा ।
स्थगितं पिहितं प्रोक्तमाहतं तु विताडितम् ॥११४॥
अथैषां रसभावेषु विनियोगं निबोधत ।
क्रोधे विवर्तितः कार्यः निमेषोन्मेषणैः सह ॥११५॥
विस्मयार्थेषु हर्षे च वीर्ये च प्रसृतं स्मृतम् ।
अनिष्टदर्शने गन्धे रसे स्पर्शे च च कुञ्चितम् ॥११६॥
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं भवेत् ।
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु ॥११७॥
नेत्ररोगे च पिहितमभिघाते विताडितम् ।
इत्येवं रसभावेषु तारकापुटयोर्विधिः ॥११८॥

## बालक्रीड़ा

की वस्तु को देखने को अवलोकित कहते हैं ॥११०॥ इस प्रकार यह सभी रस एवं भावों के अनुसार ताराओं के विषय में दर्शन की विधि है। अब इसके अनुगत पुटों के कर्म को समझो ॥१११॥ उन्मेष निमेष प्रसृत कुञ्चित सम विवर्तित प्रस्फुरित पिहित एवं विताडित या विचालित ये कर्म हैं।॥११२॥ पुटों का जो विश्लेष है उसको उन्मेष कहते ह। पुटों का सम संश्लेष भाव में प्राप्त होना निमेष कहलाता है ॥११३॥ पुटों के आयाम विस्तार को प्रसृत कहते हैं पुटों का आकुञ्चन कुञ्चित होता है। स्वा ाविक नैसर्गिक पुट सम होते हैं। वे समुद्वृत्त हुए विवर्तित कहलाते हैं। उनका स्पन्दन स्फुरित कहलाता है। स्थगित पुटों को पिहित कहते हैं। और ऊपर वाले पुट से नीचे वाले पुट के पट आघात होने से विताडित कहे जाते हैं ॥११४।११५॥

अब रस एवं भावों के विषय में इसके प्रयोग को कहते हैं। क्रोध के अभिनय में निमेष एवं उन्मेष के साथ विवर्तित को करना चाहिए। विस्मय हर्ष एवं वीर्य में प्रसृत का उपयोग होता है। अनिष्ट रूप रस गन्ध एवं स्पर्श के समय में कुञ्चित का प्रयोग होता है। शृंगार में सम को और ईर्ष्या में स्फुरित को करना चाहिए। सुषुप्ति एवं मुर्च्छा में तथा वयार के बहने के समय में घाम में वर्षा में नेत्र रोग में आखों में अञ्जन लगाने से होने वाली पीड़ा

कार्योऽनुगतमस्यैव भ्रुवोः कर्म निबोधत ।
उत्क्षेपं पातनश्चैव भ्रुकुटी चतुरं भ्रुवोः ॥११६॥

कुञ्चितं रेचितं चैव सहजं चेति सप्तधा ।
भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा ॥१२०॥

एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम् ।
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता ॥१२१॥

चतुरं किञ्चिदुच्छ्वासान्मन्थ[धु]रायतयोर्भ्रुवोः ।
एकस्या उभयोर्वापि मृदु भङ्गस्तु कुञ्चितम् ॥१२२॥

एकस्या एव ललितादुत्क्षेपाद्रेचितं भ्रुवः ।
सहजातं तु सहजं कर्म स्वभाविकं स्मृतम् ॥१२३॥

अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ।
कोपे वितर्के हेलायां लीलादौ सहजे तथा ॥१२४॥

श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत् ।
उत्क्षेपे विस्मये हर्षे रोषे चैव द्वयोरपि ॥१२५॥

### बालक्रीड़ा

में पिहित का प्रयोग करना आवश्यक है। और चोट लगने पर विताडित का इस प्रकार रस एवं भावों में तारा एवं पुटों की विधि करना चाहिए। और इसी के अनुगत यानी अनुकूल भ्रुवों के कर्म को समझाना चाहिए ॥११६:११७।११८।११९॥

उत्क्षेप पातन भ्रुकुटी चतुर कुञ्चित रेचित और सहज ये सात भ्रुवों के कर्म होते हैं ॥१२०॥

दोनों भौहों का एक साथ या पारी २ क्रम से एक एक का उन्नयन उत्क्षेप है। एक या दोनों भौहों को अधोमुख करना पातन है। भ्रुवों का मूल में समुत्क्षेप समुन्नयन भ्रुकुटी कहलाती है। किञ्चित् उच्छ्वास से उन्नयन से मन्थर (मधुर) एवं आयत भौहों का कर्म चतुर कहलाता है। एक अथवा दोनों भौहों का मृदु भङ्ग कुञ्चित कहलाता है। एक ही भौहों का ललित उत्क्षेप रेचित होता है। साथ ही पैदा होने वाले कर्म सहज कहलाते हैं इसी को स्वाभाविक कहते हैं। अब इनके रस एवं भावों के विषय के प्रयोग को कहता हूँ ॥१२१।१२२।१२३।१२४॥

कोप वितर्क हेला और लीला वगैरह में तथा सहज दर्शन एवं श्रवण में एक भौंह का उत्क्षेपण करना चाहिए ॥१२५॥

आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम् ।
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रुकुटीं बुधः ॥१२६॥
शृङ्गारे ललिते सौम्ये सुखे स्पर्शे प्रबोधने ।
एवं विधेषु भावेषु चतुरं तु प्रयोजयेत् ॥१२७॥
स्त्रीपुंरुषयोस्तु संलापे नानावस्थान्तरात्मके ।
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ॥१२८॥
विकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात् स्वाभाविकं बुधः ॥१२९॥
इत्येवं तु भ्रुवः प्रोक्तं नासाकर्म निबोधत ।
नता मन्दा विकृष्टा च सोच्छ्वासा च विघूर्णिता ॥१३०॥
स्वाभाविकी चेति बुधैः षड्विधा नासिका स्मृता।
नता मुहुःश्लिष्टपुटा मन्दा तु निभृता स्मृता ॥१३१॥
विकृष्टोत्फुल्लितपुटा सोच्छ्वासा कृष्टमारुता ।
विकूर्णिता संकुचिता समा स्वाभाविका स्मृता ॥१३२॥

बालक्रीड़ा

उत्क्षेप विस्मय हर्ष रोष असूया जुगुप्सा हास्य एवं किसी वस्तु के सूँघने में दोनों भौहों का पातन होता है ॥१२६॥

क्रोध के अवसर पर दीप्ति के समय में विद्वान् को भ्रुकुटी की योजना करनी चाहिए । ललित शृंगार सौम्य एवं सुखमय स्पर्श तथा प्रबोधन जागरण जैसे भावों में चतुर का प्रयोग करना चाहिए ॥१२७।१२८॥

नाना अवस्थाओं के अवसर में किये जाने वाले स्त्री एवं पुरुषों की बातचीत में तथा मोट्टायित कुट्टमित विलास एवं किलकिञ्चित में विकुञ्चित करना चाहिए किन्तु नृत्त में तो रेचित का प्रयोग करे ।।१२९॥

अनाविद्ध एक दूसरे से असंस्पृष्ट भावों में स्वाभाविक कर्म को विद्वान् समझें । इस प्रकार भौहों का कर्म कह दिया अब नासा के कर्म को समझें ॥१३०॥

नता मन्दा विकृष्टा सोच्छ्वासा विघूर्णिता और स्वाभाविकी इन छ प्रकार की नासाओं को विद्वानों ने कहा है ॥१३१॥

जिसमें नासापुटों का बारंबार संश्लेष और विश्लेष होते हैं वह नासिका नता तथा जिसमें मन्द २ निःश्वास एवं उच्छ्वास होते हैं वह मन्दा नासिका मानी गई है । यह निभृता मानी गई है ॥१३२॥

नासिकालक्षणं ह्येतत् विनियोगं निबोधत ।
मन्दोत्कम्पसमायुक्ते नारीणामनुरोधने ॥१३३॥
निःश्वासे च नता कार्या नासिका नाट्ययोक्तृभिः ।
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ॥१३४॥
निर्वेगौत्सुक्यचिन्तासु मन्दा शोके तु कीर्तिता ।
विकृष्टा तीव्रगन्धोर्ध्वश्वासरोषभयार्तिषु ॥१३५॥
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ।
विकूर्णितोक्ता हास्येषु जुगुप्सायामसूयिते ॥१३६॥
स्वाभाविकी शेषभावेष्वित्येवं नासिका स्मृता ।
क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ॥१३७॥
षड्विधं गण्डमुद्दिष्टं तस्य लक्षणमुच्यते ।
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ॥१३८॥
उन्नतं पूर्णमत्रोक्तं कम्पितं स्फुरितं भवेत् ।
स्यात् कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते ॥१३९॥
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ।
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमिष्यते ॥१४०॥

## बालक्रीड़ा

जिसमें नासापुट उत्फुल्लित हों वह विकृष्टा और जिसमें वायु का आकर्षण किया गया हो वह सोच्छ्वासा कहलाती है ॥१३३॥

संकुचिता नासिका विघूर्णिता और समा नासिका स्वाभाविकी मानी गई हैं । ये नासिकाओं के लक्षण कह दिये अब इनके विनियोग को समझो ॥१३४॥

नायिकाओं के मनावन जिसमें मन्द २ उत्कम्प के साथ निश्वास चलता रहता है एवं उच्छ्वास के साथ २ टूट कर मन्द २ रोदन होता है उसमें नता नासिका का प्रयोग होता है। निर्वेद औत्सुक्य चिन्ता एवं शोक में प्रयुज्यमान नासिका मन्थर कहलाती है ॥१३५॥

तीव्र गन्ध ऊर्ध्वश्वास रोष भय एवं पीड़ाओं वेदनाओं में विकृष्टा । मधुर गन्ध, तथा दीर्घ उच्छ्वास लेने में सोच्छ्वासा । हास्य जुगुप्सा एवं असूया में विघूर्णिता और अवशिष्ट भावों में स्वाभाविकी नासिका मानी गई है ॥१३६।१३७॥

क्षाम फुल्ल पूर्ण कम्पित कुञ्चित एवं सम इस तरह छ प्रकार का कपोल कहा गया है अब उसके लक्षण को कहता हूँ ॥१३८॥

अवनत कपोल को क्षाम, विकसित को फुल्ल समझना चाहिए । उन्नत कपोल को यहाँ पूर्ण कहा है । और स्फुरित कपोल कम्पित होता है । संकुञ्चित ही कुञ्चित है और

पूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम् ।
कुञ्चितं च सरोमाञ्चं स्पर्शे शीते भये ज्वरे ॥१४१॥
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ।
विवर्तनं कम्पनं च विसर्गो विनिगूहनम् ॥१४२॥
सन्दष्टकं समुद्गश्च षट् कर्माण्यधरस्य तु ।
विकूणितं विवर्तस्तु वेपनं कम्पनं स्मृतम् ॥१४३॥
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
सन्दष्टकं द्विजैर्दष्टं समुद्गः (संहितो?) सहजोन्नति ॥१४४॥
इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत ।
असूयावेदनावज्ञालनादिषु विवर्तनम् ॥१४५॥
कम्पनं वेपना शीतज्वररोषजपादिषु ।
स्त्रीणां विलासे विव्वोके विसर्गे रञ्जने तथा ॥१४६॥
विनिगूहनमायासे सन्दष्टं क्रोधकर्मणि ।
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने ॥१४७॥
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं खण्डनं छिन्नं चुक्कितं लेहनं (ग्रहणं) समम् ॥१४८॥

बालक्रीड़ा

प्राकृत कपोल को सम कहते हैं । इस तरह कपोलों के लक्षण कह दिये हैं अब इनके विनियोग को समझें ॥१३९।१४०॥

दु:ख में क्षाम का, प्रहर्ष में फुल्ल का, उत्साह एवं गर्व में पूर्ण का, रोष एवं हर्ष में कम्पित का, रोमाञ्च के सहित कम्पन में शीत ज्वर एवं भय में कुञ्चित और शेष भावों में प्राकृत यानी सम कपोल का प्रयोग होता है ॥१४१।१४२॥

विवर्त्तन कम्पन विसर्ग विनिगूहन सन्दष्टक एवं समुद्गक ये छ कर्म अधर के हैं ।१४३।

विकूणन करना ओष्ठ पुटों का तिरछा सिकोड़ना विवर्त्तन है । अधर का हिलाना वेपन कम्पन है । अलक्तक से रंगने लिए अधर का बाहर विनिष्काम निकालना विसर्ग है । वल्लभ के द्वारा बलात् चुम्बन करने के समय ओष्ठ का मुख के भीतर प्रवेश कर लेना घुसा लेना विनिगूहन है । दाँतों से ओष्ठ का डँसना सन्दष्टक है । ओष्ठ पुट की सहज उन्नति समुद्ग है । ये ओष्ठ के लक्षण बतलाये अब इनके वितियोग को समझो ॥१४४।१४५॥

असूया अवज्ञा वेदना लज्जा एवं हास्य वगैरह के समय में विवर्त्तन का विनियोग करना चाहिए । वेदना (पीड़ा) शीतबाधा या शीतज्वर रो एवं जप की वेला में कम्पन किया जाता है । स्त्रियों के साथ विलास अर्थात् दयित के अवलोकन के समय में अंगों में

दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्षः संस्फोटः खण्डनं मुहुः ॥१४६॥

छिन्नं तु गाढसंश्लेषश्चुक्षितं दूरविच्युतिः ।
लेहनं जिह्वया लेहः किञ्चित् श्लेषः समं भवेत् ॥१५०॥

दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ।
भयशीतज्वरक्रोधग्रस्तानां कुट्टनं भवेत् ॥१५१॥

जपाध्ययनसंल्लापभक्ष्ययोगे च खण्डनम् ।
छिन्नं व्याधौ भये शीते व्यायामे रुषितेक्षिते ॥१५२॥

जृम्भणे चुक्षितं कार्यं तथा लेह्ये च लेहनम् ।
समं स्वभावभावेषु सन्दष्टं क्रोधकर्मसु ॥१५३॥

इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ।
विधुतं विनिवृतं च निर्भुग्नं भुग्नमेव च ॥१५४॥

बालक्रीड़ा

क्रिया में वचनों में सातिशय विशेष क्रीड़ा में, साधारण वस्तु के अहंकार रूपी गर्व से तथा धन दौलत कुल एवं गुणों से होने वाले अहंकार रूप अभिमान के कारण चाही हुई वस्तु में भी अनादर रूप विव्वोक में और महावर से रंगने में विवर्त्तन का विनियोग होता है । आयास में विनिग्रहन का, क्रोध में सन्दष्ट का, अनुकम्पा चुम्बन एवं अभिनन्दन में समुद्ग का उपयोग होता है । इस तरह ओष्ठ के कर्म कहे। अब चिबुक ठुड्डी के कर्म को समझो।१४६।१४७।१४८।

यहाँ नाटच के प्रसंग में दाँतों की क्रिया के द्वारा चिबुक का लक्षण कहा जाता है अतः दन्त कर्म को कहता हूँ । वे दन्त कर्म कुट्टन खण्डन छिन्न चुक्षित लेहन सम और दष्ट ये हैं ॥१४९॥

दाँतों का सघर्ष कुट्टन हैं । वार २ संस्फोट यानी संश्लेष एवं विश्लेष खण्डन है । दाँतों का गाढ संश्लेष छिन्न ह । दाँतों की दूर विच्युति उनका दूर रहना चुक्षित है । दाँतों में तृण का धारण करना तृण का ग्रहण है । यहाँ विचार होता है कि लेहनं जिह्वया लेहः ऐसा पाठ यहाँ इस जगह पर मिलता है किन्तु जिह्वा के कर्मों में लेहन होता है । दाँतों का कर्म लेहन नहीं होता हैं उनसे तो ग्रहण या चर्वण होता है । दाँतों का किञ्चत् श्लेष सम होता है । दाँतों से अधर का डँसना दष्ट माना है । इस प्रकार दाँतों का विनियोजन करना चाहिए ॥१४१।१५०।१५१॥

भय, शीत, शैत्य प्रयुक्त ज्वर, क्रोध में दाँतों का संघर्षण होता है । जप, अध्यन, परस्पर में संल्लाप एवं भक्षणीय पदार्थ के संयोग में खण्डन क्रिया का विनियोग होता है । व्याधि भय शीत व्यायाम रुदित एवं घाव में छिन्न का, जंभाई लेने वगैरह में चुक्षित का, भय

विवृतं च तथोद्वाहि कर्माण्यत्रास्यजानि तु ।
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥१५५॥
अवाङ्मुखं च निर्भुग्नं व्याभुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च विवृतमुद्वाह्युत्क्षिप्तमेव च ॥१५६॥
विनिवृत्तमसूयायां ईर्ष्याक्रोधकृतेन च ।
अवज्ञा विहतादौ च स्त्रीणां कार्या प्रयोक्तृभिः ॥१५७॥
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥१५८॥
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावजम् ।
निर्वेदौत्सुक्यचिन्तासु नये च विनिमन्त्रणे ॥१५९॥
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे ॥१६०॥
एवं नामेतिकार्यं च कोपवाक्ये विचक्षणैः ।
समं साच्यनुवृत्तादि यच्च दृष्टिविकल्पितम् ॥१६१॥

## बालक्रीड़ा

में ग्रहण का और भावो के स्वाभाविक अभिनय में सम का तथा क्रोध की क्रिया में संदष्द का प्रयोग होता है इस तरह दाँत ओष्ठ एवं जिह्वा के करने से चिबुक की क्रिया होती है।१५२।१५४।

विधुत विनिवृत्त निर्भुग्न भुग्न विवृत्त और उद्वाहि ये मुख के कर्म यहाँ होते हैं ।१५५।

मुख को घुमाना पराङमुख व्यावर्त्तन करना विनिवृत्त है । मुख को तिरछा आयत करना विधुत है । मुख को अवाङ अधोमुख करना निर्भुग्न है । मुख को किञ्चित् आयत करना व्याभुग्न कहलाता है । ओष्ठों को विश्लिष्ट करना विवृत कहलाता है । मुख के उत्क्षिप्त को उद्वाहि कहते हैं ।।१५६।।

असूया, ईर्ष्या एवं क्रोध के कार्यों तथा स्त्रियों की अवज्ञा और विहार में विनिवृत्त का प्रयोग नटों को करना चाहिए । ऐसा नहीं करना ऐसा नहीं बोलना इत्यादि रूप में वारण करने के समय में विधुत को, और गम्भीर आलोकन वगैरह में निर्भुग्न को जानना चाहिए। स्त्रियों के लज्जान्वित कार्य में और यतियों के स्वाभाविक कार्य में भग्न का प्रयोग करना चाहिए ।।१५७।१५८।१५९।।

निर्वेद, उत्सुकता, चिन्ता, नय, निमन्त्रण हास्य शोक एवं भय वगैरह में विवृत को जानना चाहिए ।।१६०।।

स्त्रियों की लीला में गर्व में अनादर करते हुए चलने में कोपमय वाक्य में एवं नाम ऐसा यह इस रूप में उद्वाहि को करना चाहिए ।।१६१।।

तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम् ।
अथातो मुखरागश्च चतुर्धा परिकीर्तितः ॥१६२॥
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ।
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ॥१६३॥
मध्यस्थादिषु भावेषु मुखरागः प्रयोक्तृभिः ।
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ॥१६४॥
वीररौद्रमदाद्येषु रक्तः स्यात् करुणे तथा ।
भयानके सबीभत्से श्यामं सञ्जायते मुखम् ॥१६५॥
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् ।
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः ॥१६६॥
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ।
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ॥१६७॥
द्विगुणां लभते शोभां रात्राविव निशाकरः ।
नयनाभिनयोऽपि स्यान्नानाभावरसान्वितः ॥१६८॥

बालक्रीड़ा

सम साचि अनुवृत्त और आदि पद से ग्राह्य अवलोकित विलोकित उल्लोकित आलोकित एवं प्रलोकित रूप दृष्टियों के विकल्पित को कहा है विद्वान् लोग उनका अनुसरण करते हुए उसके अनुकूल मुख को करें।।१६२।।

अब यहाँ चार प्रकार के मुखराग को कहूँगा। क्योंकि रसात्मिक मनोवृत्ति का विवरण मुखराग करता होता है अतः रस एवं भावों के उपयोगी होने से मुख राग को कहता हूँ। स्वाभाविक प्रसन्न रक्त एवं श्याम ये अन्वर्थ है इनमें नाम के अनुकल अर्थ का संश्रयण हैं। स्वाभाविक मुखराग को स्वभाव के अभिनय दिखाने में और मध्यस्थ यानी अनाविष्ट भावों में करना चाहिए ।।१६३।१६४।।

अद्भुत हास्य एवं शृंगार रस में प्रसन्न निर्मल मुखराग को वीर रौद्र करुण रस एवं मद भाव के अभिनय में रक्त अरुण मुख राग को और बीभत्स और भयानक रस के अभिनय में श्याम मुखराग को करना चाहिए। इस प्रकार रस एवं भावरूप अर्थों में मुखराग का प्रयोग करना चाहिए। १६५।१६६।

शाखा अङ्ग एवं उपाङ्गों के संयोग से शुभ अभिनय किया गया। यदि यह अभिनय मुखराग से विहीन है तो शोभा से अन्वित नहीं होता है ।।१६७।।

आंङ्गिक अभिनय थोड़ा भी क्यों न हो यदि वह मुखराग से समन्वित है तो जैसे रात्रि में निशाकर की शोभा होती है वैसे ही वह द्विगुणित शोभा को पाता है ।।१६८।।

पञ्चषष्टिसहस्राणि सहस्रार्धश्च संख्यया ।
षट्त्रिंशच्चैव वृत्तानि ह्यष्टयां निगदितानि च ॥६४॥ (६५५३६)
एकत्रिंशत्सहस्राणि वृत्तानाञ्च द्विसप्ततिः ।
तथा शतसहस्रञ्च छन्दांस्यत्यष्टिसंज्ञिते ॥६५॥ (१३१०७२)
धृत्यामपि हि पिण्डेन वृत्तान्याकल्पितानि तु ।
तज्ज्ञैः शतसहस्रे द्वे शतमेकं तथैव च ॥६६॥
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥६७॥ (२६२१४४)
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च ।
तथा शतसहस्राणि पञ्च वृत्तशतद्वयम् ॥६८॥
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च । (५२४२८८)
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया ॥६९॥
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च ।
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः ॥७०॥(१०४८५७६)
तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
सप्त वै गदितास्त्वत्र नवतिश्चव संख्यया ॥७१॥
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ॥७२॥(२०९७१५२)
चत्वारिंशत्तथैकश्च लक्षाणामथ संख्यया ।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा ॥७३॥

बालक्रीड़ा

(मूल) पैंसठ हजार पाँचसो छत्तीस भेद अष्टि में होते है ।६४।

(मूल) एक लाख एकतीस हजार बहत्तर भेद अत्यष्टि में होते हैं ।६५।

(मूल) दो लाख बासठ हजार एक सौ चवालीस भेद धृति में होते हैं । पाँच लाख चौबीस हजार दो सौ अठ्ठासी भेद अतिधृति में होते हैं ।६६।६७।६८।

(मूल) दश लाख अडतालीस हजार पांच सो छिहत्तर भेद कृति में होते हैं ।६९।७०।

(मूल) बीस लाख सन्तानवे हजार एक सो बावन भेद प्रकृति में होते हैं ।७१।७२।

(मूल) एकतालीस लाख चौराणवे हजार तीन सो चार भेद आकृति में होते हैं ।७३।

शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम् । (४१९४३०४)
ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः ॥७४॥
अष्टाशीति सहस्राणि वृत्तानां षट्छतानि च ।
अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु ॥७५॥(८३८८६०८)
तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः ।
सप्त चैव सहस्राणि षोडश द्वे शते तथा ॥७६॥
कोटिश्चैवेह वृत्तानि संकृतौ कथितानि वै । (१६७७७२१६)
कोटित्रयश्चाभिकृत्यां पञ्चत्रिंशद्भिरन्वितम् ॥७७॥
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा ।
चतुष्टयं शतानाञ्च द्वात्रिंशद्भिः समन्वितम् ॥७८॥ (३३५५४४३२)
षट् कोटयस्तथोत्कृत्यां लक्षाणामेकसप्ततिः ।
चतुष्पष्टिशतान्यष्टौ सहस्राण्यष्ट चैव हि ॥७९॥ (६७१०८८६४)
ऊक्ताद्युत्कृतिपर्यन्तवृत्तसंख्यां विचक्षणः ।
एतेन च विकल्पेन वृत्तेष्वेतेषु निर्दिशेत् ॥८०॥
सर्वेषां छन्दसामेवं वृत्तानि कथितानि वै ।
तिस्रः कोटयो दश तथा सहस्राणां शतानि तु ॥८१॥

## अभिनवभारती

षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्ततिः ।
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च ॥

## बालक्रीड़ा

(मूल) तिरासी लाख अठ्ठासी हजार छसो आठ भेद विकृति में होते है ।७४।७५।

(मूल) एक करोड सडसठ लाख सतहत्तर हजार दो सौ सोलह भेद संकृति मे होते हैं ।७६।

(मूल) तीन करोड पैंतीस लाख चौवन हजार चार सो बत्तीस भेद अभिकृति में हैं ।७७।७८।

(मूल) छ करोड एकहत्तर लाख आठ हजार आठ सो चौसठ भेद उत्कृति में होते हैं ।७९।

(मूल) उक्ता से आरम्भ करके उत्कृति पर्यन्त वृत्तों के भेद वृत्त के विद्वानों को कहना चाहिए ।८०।

चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ।
सप्तभिः सहितान्येव सप्त चैव शतानि च ॥८२॥
षड्विंशतिरिहान्यानि, व्याख्यातानि समासतः।(१३४२१७७२६)
समानि गणनायुक्तिमाश्रित्य कथितानि वै ॥८३॥
सर्वेषां छन्दसामेवं त्रिकैर्वृत्तं प्रयोजयेत् ।
ज्ञेयाश्चाष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥ ८४ ॥
त्रीण्यक्षराणि विज्ञेयस्त्रिकोंशः परिकल्पितः ।
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥ ८५ ॥
गुरुपूर्वो भकारः स्यान्मकारे तु गुरुत्रयम् ।
जकारो गुरुमध्यस्थः सकारोऽन्त्यगुरुस्तथा ॥ ८६ ॥
लघुमध्यस्थितो रेफस्तकारोऽन्त्यलघुः परः ।
लघुपूर्वो यकारस्तु नकारे तु लघुत्रयम् ॥ ८७ ॥

अभिनवभारती

चतुः षष्टिस्तु वृत्तानि ह्युत्कृतावपि संख्यया ॥ इति प्रमाणम् । उत्कृत्यन्तानां संख्यां प्रमाणीकृत्याह तिस्रः कोट्य इत्यादिना ।८१।८२।

बालक्रीड़ा

(मूल) तेरह करोड बयालीस लाख सतरह हजार सात सो छब्बीस भेद सम्पूर्ण छन्दों के भेदों को जोडकर कहे हैं ।८१।८२।

(मूल) गणना की युक्ति का आश्रयण करके छब्बीस अक्षरों पर्यन्त सभी छन्दों के भेद हमने कह दिये हैं ।८३।

(मूल) सभी छन्दों के प्रयोग को त्रिकों के आधार पर करना चाहिए । उनमें आठ त्रिक होते हैं । संज्ञा के हिसाब से उनके स्थान एवं अक्षरों को समझना चाहिए ।८४।

(मूल) पहले तीन अक्षरों को समझें । जिनसे त्रिक अंश की परिकल्पना की है । जिस त्रिक को गुरु एवं लघु अक्षरों से सम्पूर्ण वृत्तों में नियमतः किया है ।८५।

(मूल) आदि गुरु भगण, त्रिगुरु मगण, मध्यगुरु जगण, अन्त्यगुरु सगण, मध्यलघु रगण, अन्त्यलघु तगण, आदिलघु यगण एवं त्रिलघु नगण होता है ।८६।८७:

उत्कृति पर्यन्त वृत्तों की संख्या को इकठ्ठी करके तिस्रः कोटयः इत्यादि से लिखते हैं: इन अंकों को पूर्व से मिलाने पर क्रमशः सब संख्याओं का ज्ञान होता है ।८२।

एक है आदि में जिनके ऐसे जो छब्बीस अक्षर पर्यन्त छन्द उन छब्बीस अक्षर वाले छन्दों में क्रमवशात् माने क्रमशः द्विगुण पिण्ड बनावे फिर छन्दों के प्रमाण से मिलित उन

एते ह्यष्टौ त्रिकाः प्राज्ञैर्विज्ञेया ब्रह्मसम्भवाः ।
लाघवार्थं पुनरमी छन्दोज्ञानमवेक्ष्य च ॥ ८८ ॥
एभिर्विनिर्गताश्चान्या जातयोऽथ समादयः ।
अस्वराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणैः ॥ ८९ ॥
गुर्वेकं गिति विज्ञेयं तथा लघु लिति स्मृतम् ।
नियतः पदविच्छेदो यतिरित्यभिधीयते ॥ ९० ॥
गुरु दीर्घं प्लुतश्चैव संयोगपरमेव च ।
सानुस्वारविसर्गं च तथान्त्यश्च लघु क्वचित् ॥ ९१ ॥
गायत्र्यां द्वौ त्रिकौ ज्ञेयौ, उष्णिक् चैकाधिकाक्षरा ।
अनुष्टुप् द्व्यधिका चैव बृहत्यां च त्रिकास्त्रयः ॥ ९२ ॥

### अभिनवभारती

तदङ्कं पूर्वेण पिण्डयित्वा सर्वसंख्याज्ञानं क्रमवशात् ।

एकादिकक्रमवशाद् द्विगुण(द्विपिण्ड्या ?) (णं सुपिण्ड्य)
च्छन्दःप्रमाणकलितानथ पिण्डयेत्तान् ।
एकं क्षिपेत्तदुपरीति समस्तवृत्त-
संख्याप्रकाशनविधौ लघुरभ्युपायः ॥

### बालक्रीड़ा

इस विषय का एक प्रसिद्ध पद्य है—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्त्यगुरुः कथितोऽन्त्यलघुस्तः ॥

(मूल) पुनः ये पूर्वोक्त आठ नाम वाले आठगण हैं। इनकी उत्पत्ति ब्रह्मा से हुई है ऐसा जानना चाहिए। लाघव के लिए छन्द के प्रमाण को देखकर ये बतलाये गये हैं।८८।

(मूल) इन्हीं त्रिकों से और भी समादि जातियाँ निकली हैं। अर्थात् समवर्णवाली प्रतिष्ठा सुप्रतिष्ठा आदि जाति इन्हीं त्रिकों से बनती हैं। वृत्तों के लक्षणों में ये अस्वर एवं सस्वर भी कही जाती है।८९।

(मूल) अस्वर जैसे एक गुरु को स्वर रहित ग् समझना चाहिए। तथा एक लघु को अस्वर ल् माना है। किसी नियत स्थान पर किये गये पद विच्छेद की यति यह संज्ञा है।९०।

(मूल) दीर्घ प्लुत संयोगपरक ह्रस्व सानुस्वार वर्ण और विसर्ग को गुरु समझना चाहिए। कहीं पर अन्त्य लघु को भीं गुरु समझना चाहिए।९१।

(मूल) गणों के प्रमाण से गायत्री में दो त्रिकों को, उष्णिक् में एकाक्षर अधिक दो त्रिकों को, अनुष्टुप् में द्व्यधिक दो त्रिकों को, वृहती में तीन त्रिकों को।९२।

एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ।
चतुस्त्रिका तु जगती सैकातिजगती पुनः ॥ ९३ ॥

अभिनवभारती

यथा (त्र्य?) (सप्ता) क्षरे तत्पिण्डयित्वा एकाक्षरक्षेपात् (पूर्तिः) एकसंख्याकाक्षरा द्न्याक्षरक्षेपः षडविंशत्यक्षरं यावत् "द्व्यंश उक्तक्रमेणेह द्वैगुण्यं यावदुत्कृतेः" ॥इति ॥९२।

एकाक्षरे द्वौ, द्व्यक्षरे चत्वारः, त्र्यक्षरेऽष्टौ, चतुरक्षरे षोडशेत्यादिसंक्षेपः। अनेनैवोपायेन विचार्य ग्रन्थे पाठो निश्चेयः ।९२। सर्वेषां छन्दसां वृत्तानामित्यादावर्थः समासेन जयदेवोऽभ्यधात्—"सर्वादिमध्यान्तग्लौ त्रिकौ म्नौ भ्यौ ज्रौ स्तौ" इति (अ. १–२) त्रिकैरुपलक्षितेऽपि वृत्ते त्रिकसंख्यानेन यत्र छन्दो न पूर्यते यथोष्णिक्, अत्रैकमधिकमक्षरमधिकत्वेनोक्तं अनुष्टुभि द्वे। अत्र त्रिकबीजानि गुरुलघुरूपाण्येव कर्तव्यानि ।९३।

बालक्रीड़ा

(मूल) पंक्ति में एकाक्षर अधिक तीन त्रिकों को। त्रिष्टुप् में द्व्यधिकाक्षर तीन त्रिकों को। जगती में चार त्रिकों को। अतिजगती में एकाक्षराधिक चार त्रिकों को।९३।

पिण्डों को जोड देवे। कमी होने पर एक अंक और ऊपर से फेंकदे। यह एक समस्त वृत्तों की संख्या के प्रकाशन विधि की में लघु उपाय है।

जैसे सात अक्षरों वाले उष्णिक् छन्द में त्रिकों को जोडने के बाद एक अक्षर का क्षेपण किया तब छन्द की पूर्ति हो गई। जैसे इसमें एक अक्षर के क्षेप से एक संख्या की वृद्धि हुई उसी तरह अन्य एक अक्षर का और क्षेप करे। यह प्रक्रिया छव्वीस अक्षरों तक करनी चाहिए। जैसा कि कहा है—छन्दों में कहे हुए क्रम से उल्लास लेकर उत्कृति पर्यन्त छन्दों की संख्या को द्विगुण कर देना चाहिए। उत्कृति पर्यन्त छन्दों की संक्या को द्विगुणित करने के लिए उदाहरण लिखते हैं। एक अक्षर वाले छन्द के प्रस्तार में दो भेद होते हैं। दो अक्षर वाले छन्द के उससे द्विगुणित चार भेद होते हैं। तीन अक्षर वाले छन्द के उससे द्विगुणित आठ भेद होते हैं। चार अक्षर वाले छन्द के प्रस्तार में उससे दूने सोलह भेद होते है इत्यादि संक्षेप से लिखा है इसी उपाय के अनुसार विचार करके ग्रन्थ में पाठ का निश्चय कर लेना चाहिए।९२।

"सम्पूर्ण छन्द माने वृत्तोंका" सर्वेषां छन्दसां वृत्तानामित्यादि में जो उसको संक्षेप से जयदेव ने कहा है कि सभी छन्दों में आदि मध्य एवं अन्त में गुरु एवं लघु से बने हुए त्रिक हैं जैसे मगण १ नगण २ भगण ३ यगण ४ जगण ५ रगण ६ सगण ७ एवं तगण ८ ये आठ त्रिक हैं। इन त्रिकों से वृत्त के उपलक्षित होने पर भी जहां त्रिक का संख्यान करने पर भी छन्द की पूर्ति नहीं होती है जैसे उष्णिक् छन्द है। यहां एक अक्षर को अधिक रूप में कहा है। अनुष्टुप् में दो को कहा है। इन छन्दो में त्रिक बनाने के लिए बीजभूत गुरु लघुरूप अक्षर ही हैं उन्हीं को अधिक करना चाहिए। जैसा कि समझिये—एक गुरु

शक्वरी द्व्यधिका पञ्च त्रिका ज्ञेयातिशक्वरी ।
एकाधिकास्त्वराष्टिश्च द्व्यधिकात्यष्टिरुच्यते ॥ ९४ ॥
षट् त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ।
कृतिश्च द्व्यधिका प्रोक्ता प्रकृत्यां सप्त वै त्रिकाः ॥ ९५ ॥

## अभिनवभारती

अत्रैकमधिकमिति। तथा चैकं गुरु लघु वा द्वे गुरूणी द्वे लघूनी द्वे लघुगुरूणी गुरुलघूनी वा तदाह द्विकौ ग्लावित्यादि वक्ष्यमाणश्लोकेन व्याचष्टे नैवातिरिक्तमिति। सम्पदिति स्वराट् विराट् भूरिक् निचृत् इत्येषां श्रुतावेव संभवो न काव्य इति तात्पर्यम्। एतन्निरूपणं तु उपयुज्यते यत्र वेदवाक्यसदृशं वाक्यं निर्णीयते, यथा अभिज्ञानशाकुन्तले।९४।

## बालक्रीड़ा

(मूल) शक्वरी में द्वयधिकाक्षर चार त्रिकों को अतिशक्वरी में पांच त्रिकों को। अष्टि में एकाक्षराधिक पांच त्रिकों को। अत्यष्टि में द्वयधिकाक्षर पांच त्रिकों को।९४।

(मूल) धृति में छ त्रिकों को। अतिधृति में एकाक्षराधिक छ त्रिकों को। कृति में द्वयधिकाक्षर छ त्रिकों को। प्रकृति में सात त्रिकों को।९५।

एवं एक लघु या दो गुरु एवं दो लघु या लघु गुरु गुरु लघु। इसी लिए कहा था कि यहां एक अधिक अक्षर है। द्विकौ ग्लौ इत्यादि वक्ष्यमाण श्लोक के अनुसार व्याख्या करते हैं कि नैवातिरिक्तम्। सम्पदिति। स्वराट् विराट् भुरिक् निचृत् इन छन्दों की वेद में ही सम्भावना है काव्य में नहीं है।

यह यहां तात्पर्य है। यहां जयश्रीकार के मत का उल्लेख करते हैं उनके उदाहरण भी ये हैं।

शूरः सुमुखः सदयः शान्तो धीरस्त्यागी गुणवान् भक्तः
कुलजोऽस्माकं नित्यं मित्रं भवतु श्लाध्यम्। विराट्
अम्भोदानामसितानां श्रुत्वा शब्दं सन्तत—बर्हः
अम्भोभारान्मन्दगतीनामुद्ग्रीवोऽयं रौति मयूरः। निचृत्
अथ तत्र शुचौ लतागृहे कुमुमोद्गारिणि तौ निषीदतुः
मृदुभिर्मृदुमारुतेरितैरुपगूढाविव बालपल्लवैः। स्वराट्
मनोज्ञमपि सिन्दुवारतः कुन्दकुसुमाग्रचञ्च षट्पदः
न सर्पति तुषारशङ्कितश्चन्द्रालोकविशेष शीतलम्। भूरिक्

इस निरूपण का वहां उपयोग है जहां वेद वाक्य के सदृश वाक्य का निर्णय करना हो। जैसे अभिज्ञान शाकुन्तल में जब शकुन्तला को कोई स्त्री संस्थान ज्योति उठाकर ऊपर में लेगई उस समय का नेपथ्य का वाक्य ऋचा के जैसा है।९४।

आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ।
अष्ट त्रिकाः संकृतौ स्यात् सैका चाभिकृतिः पुनः ॥ ९६ ॥
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणमानतः ।
गुर्वेकं ग इति प्रोक्तं गुरुणी गाविति स्मृतौ ।
लघ्वेकं ल इति ज्ञेयं लघुनी लाविति स्मृतौ ॥ ९७ ॥
संपद्विरामपादश्च दैवतस्थानमक्षरम् ।
वर्णः स्वरो विधिर्वृत्तमिति छन्दोगतो विधिः ॥ ९८ ॥
नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः ।
विधाने च्छन्दसामेष संपदित्यभिसंज्ञितः ॥ ९९ ॥
यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः ।
पादश्च पद्यते धातोश्चतुर्भाग इति स्मृतः ॥ १०० ॥

अभिनवभारती

अर्थस्यावान्तररूपस्य समाप्तिर्लक्षणतो यतिः । "यथा मीलति सति राज्ञि" यथा "आयान्त्या तुल्यकालं" इति न तु "जम्भारातीभकुम्भो; द्भवं" इति उच्छब्दोऽर्थसमा-

बालक्रीड़ा

(मूल) आकृति में एकाधिकाक्षर सात त्रिकों को। विकृति में द्वचधिकाक्षर सात त्रिकों को। संकृति में आठ त्रिकों को। अभिकृति में एकाक्षराधिक आठ त्रिकों को।९६। उत्कृति मे द्वचधिकाक्षर आठ त्रिकों को समझना चाहिए।

(मूल) एक गुरु का चिह्न ग्। दो गुरुओं का चिह्न गौ। एक लघु का ल्। दो लघुओं का लौ माना है।९७।

(मूल) अब इन छन्दों के सम्पदादि को समीचीन रूप से कहते हैं। सम्पत् १ विराम २। पाद ३। देवता ४। स्थान ५। अक्षर ६। वर्ण ७। स्वर ८। विधि ९। और वृत्त १० यह छन्दों के वारे में विधि है।९८।

(मूल) जहां न कोई अक्षर अतिरिक्त है न बढ़ा हुआ है और न कोई अक्षर हीन है उसका नाम छन्दों के विधान में सम्पत् है।९९।

(मूल) जहां अर्थ की समाप्ति है वह विराम है। पाद पद धातु से बनता है और यह छन्द का या पद्य का चतुर्थ भाग है।१००।

अवान्तर रूप अर्थ की लक्षण के अनुसार समाप्ति ही यति है जैसे "मीलति सति राज्ञि" में; और भी जैसे "आयान्त्या तुल्यकालम्" में यति है। जम्भारातीभकुम्भो पर यति होती है किन्तु अवान्तर अर्थ की समाप्ति नहीं है। वह तो कुम्भोद्भव पर होती है इस लिए वह उच्छब्द है क्योंकि यहाँ अर्थ की समाप्ति नहीं है। पूरा श्लोक ऐसा है—

**अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।**
**शरीराश्रयसंभूतं दिगाश्रयमथापि च ॥ १०१ ॥**

### अभिनवभारती

प्यभावात् । चतुर्भाग इति पादान्ते छेदः कर्तव्यः, न तु "ताम्बूलवल्लीपरिणद्धपूगासु, ऐला" । इति । प्रयोगी प्रतिपादमङ्कुरीकृत्य पठन्मध्ये विश्राम्यति । विश्रान्तौ चात्र वृत्तभङ्गोऽर्थभङ्गोऽभिनेयस्याश्रव्यत्वाद्भट्टशङ्करादिभिरुपगतमेतत् "क्वचिदुपान्त्यो वा" इति ।१००।

अधिष्ठात्री देवता वह्न्यादयः । शरीराश्रयेत्यादि । तथोक्तं कात्यायनेन—

वीरस्य भुजदण्डानां वर्णने स्रग्धरा भवेत् ।
नायिकावर्णने कार्यं वसन्ततिलकादिकम् ॥

शार्दूललीला प्राच्येषु मन्दाक्रान्ता च दक्षिणे । इत्यादि ।

प्लुतस्याप्यत्र प्रयोगो भवत्येव । यथा—"यतोऽभिमानेन स एष मूढो द्रोणारिरे याति पदे विलग्नः" स तु पाठो दीर्घवत्पठितव्यः प्रयोक्त्रा त्रिमात्र एव ।

### बालक्रीड़ा

(मूल) अग्नि सविता, सोम, वृहस्पति, मित्रावरुण, इन्द्र एवं विश्वेदेव इसमें देवता है । शरीर के आश्रय से सम्भूत एवं दिशाओं के आश्रय से सम्भूत ये स्थान दो प्रकार के होते हैं ।१०१।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सिक्ता इवोघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ।

चतुर्भाग अर्थात् चार भाग करना आवश्यक है और उसमें भी पाद की समाप्ति छेद करना चाहिए न कि ताम्बूलवल्ली परिणद्ध पूगा में जैसे छेद किया है वैसे छेद करे । क्योंकि "पूगासु ऐला पर विश्रान्ति करने से वृत्तभङ्ग अर्थभङ्ग और अभिनेय की अश्रव्यता दोष है । क्योंकि प्रयोग करने वाला प्रयोगी अभिनेता प्रत्येक पाद को अङ्कुर बनाकर पढ़ता हुआ मध्य में विश्राम लेता है । इस तथ्य को भट्ट शंकर वगैरह ने भी स्वीकार किया है कि कहीं पर पाद के समीप से भी यति होती है :१००।

अग्नि आदि अधिष्ठात्री देवता हैं । शरीराश्रयेत्यादि । जैसा कि कात्यायन ने कहा है—

बीरों के भुजदण्डों के वर्णन में स्रग्धरा छन्द होना चाहिए । नायिका के वर्णन में वसन्ततिलकादिक को करना चाहिए । प्राच्यों में शार्दूल की लीला होनी चाहिए अर्थात् पूर्व दिग्भव व्यक्तियों के वर्णन में शार्दूल विक्रीडित और दक्षिण दिग्भवों के वर्णन में मन्दाक्रान्ता छन्द का उपयोग करना चाहिए इत्यादि ।१०१।

शारीरं मन्त्रसंभूतं छन्दो गायत्रसंज्ञितम् ।
क्रुष्टे मध्यं दिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥ १०२ ॥
तृतीयसवनश्चापि शीर्षण्यं जागतं हि यत् ।
ह्रस्वं दीर्घं प्लुतश्चैव त्रिविधश्चाक्षरं स्मृतम् ॥ १०३ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥ १०४ ॥

अभिनवभारती

श्वेतादय इति छन्दसि प्रतिशाख्यादौ विविधो वर्णः कृतः तदनुपयोगान्नास्माभिर्लिखितम् । भगवते कृत इति श्लोके केषांचिद्दोधकतोकटादीनां गीयमानतया शोभातिशयो भवति । स्रग्धरादीनां तु पाठेन । च शब्देन प्रकारार्थेन व्याचष्टे दिव्य इति । प्रथम इति स्तोत्रशास्त्रेषु सप्तानामेव छन्दसां बाहुल्येन दर्शनात् । देवस्तुत्यादौ देवेषु वक्तृव्वयं गण इत्यर्थः । गण इति द्वितीयो दिव्यनिवृत्तौ गण इत्यर्थः । तेन मानुषेषु वक्तव्वयं प्रायेण । तृतीयस्तु दिव्यमानुषेषु च रामादिषु नरपतिषु च ।

बालक्रीड़ा

(मूल) जिनमें गायत्री संज्ञक छन्द शरीराश्रय सम्भूत है । और त्रिष्टुप् संज्ञक छन्द दिगाश्रय सम्भूत है । यहां उच्चारण के विषय में मध्यन्दिन वेला है ।१०२।

(मूल) जगती छन्द शीर्षण्य है । तृतीय सवन उसकी वेला है अर्थात् तृतीय सवन की वेला में उसका उपयोग होता है । ह्रस्व दीर्घ एवं प्लुत इस तरह तीन प्रकार के अक्षर होते हैं ।१०३।

(मूल) यहां छन्दों के रङ्ग वर्ण सात हैं श्वेत पिशङ्ग, कृष्ण, लोहित, नील एवं गौर । तथा तार मन्द्र और मध्यम ये तीन प्रकार के यहां स्वर हैं ।१०४।

प्लुत का भी प्रयोग यहाँ होता ही है । जैसे—ए सैनिको ! यह वह द्रोणाचार्य का अरि मूढ धृष्टद्युम्न पैर में लगा हुआ अभिनय के साथ जा रहा है । यहां ए यह सम्बोधन में प्लुत है अतः प्रयोक्ताओं को इसका पाठ दीर्घ की तरह करना चाहिए । किन्तु यह है त्रिमात्र ही ।१०२।

छन्दों के श्वेतादि वर्ण हैं । गायत्री प्रभृति छन्दों के सित (श्वेत) सारङ्ग (हरित) पिशङ्ग (पीला) कृष्ण, नील (ब्ल्यू) लोहित वर्ण हैं । प्रातिशाख्य आदि में इनके विविध वर्ण किये हैं हमने अनुपयुक्त समझ कर नहीं लिखे हैं : "भगवते कृत" इत्यादि किसी के श्लोक में दोधक एवं तोटक वगैरह छन्दों को गाने से शोभातिशय होता है और स्रग्धरा आदि का तो पढ़ने से होता है ।

प्रकारार्थक च शब्द से व्याख्यान करते हैं दिव्यः इति । प्रथमः इति । स्तोत्र शास्त्रों में इन सात ही छन्दों को अधिकतर देखते हैं । देवताओं की स्तुति आदि में या देवता वक्ता हो तब यह गण होता है । यह अयं गणः कहने का अर्थ है ।

ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथैवार्थकृतो भवेत् ॥ १०५ ॥
छन्दसो यस्य पादे स्याद्धीनं वाऽधिकमेव वा ।
अक्षरं निचृदिति प्रोक्तं भूरिक् चेति द्विजोत्तमाः ! ॥१०६ ॥
अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ।
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ।। १०७ ॥
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ।
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ॥ १०८ ॥
गायत्र्युष्णिगनुष्टप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गण ॥ १०९ ॥
तथातिजगती चैव शक्वरी चातिशक्वरी ।
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणः ॥ ११० ॥
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ।
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा ॥ १११ ॥

बालक्रीड़ा

(मूल) ध्रुवा के विधान के समय में इनके लक्षणों को कहूंगा। विधि दो तरह की होती है एक गणकृत दूसरी अर्थकृत होती है ।१०५।

(मूल) जिस ऋचा के पाद में एक अक्षर हीन हो और अन्य तीन पाद समान हो वह निचृत् कहलाती है। जिस ऋचा के पाद में एक अक्षर अधिक हो और अन्य तीन पाद समान हों वह भूरिक् कहलाता है ।१०६।

(मूल) जहां पादों में दो अक्षर अधिक हों उसको स्वराट् और जहां पादों मे दो अक्षर कम हों उसको सूरियोंने विराट् कहा है ।१०७।

(मूल) दिव्य १ दिव्येतर २ एवं दिव्यमानुष ये तीन गण होते हैं। जिनमें गायत्री १ उष्णिक् २ अनुष्टुप् ३ बृहती ४ पंक्ति ५ त्रिष्टुप् ६जगती यह प्रथम दिव्य गण हैं ।१०८।१०९।

(मूल) और अतिजगती १ शक्वरी २ अतिशक्वरी ३ अष्टि ४ अत्यष्टि ५ धृति ६ और अतिधृति ७ यह द्वितीय दिव्येतर गण है ।११०।

(मूल) कृति १ प्रकृति २ आकृति ३ विकृति ४ संकृति ५ अभिकृति ६ एवं उत्कृति ७ यह तृतीय दिव्यमानुष गण है ।१११।

केवल गण: ऐसा लिखने से प्रतीत होता है कि दिव्यों की निवृत्ति बतलाने के लिए द्वितीय गण कहा है ऐसा इसका अर्थ है। अतः जब मनुष्य वक्ता होंगे उस समय यही गण प्रायेण होता है। तृतीय कृतिश्च इत्यादि गण दिव्यमानुष रामादि में और नरपति में भी प्रयुक्त होता है ।१०४।

एतेषां छन्दसां भूयः प्रस्तारविधिसंश्रयम् ।
लक्षणं सम्प्रवक्ष्यामि नष्टमुद्दिष्टमेव च ॥११२॥
प्रस्तारोऽक्षरनिर्दिष्टो मात्रोक्तश्च तथैव हि ॥
द्विकौ ग्लाविति वर्णोक्तौ मिश्रौ चेत्यपि मात्रिकौ ॥ ११३ ॥

## अभिनवभारती

प्रस्तारस्तत्र संख्यादि सर्वमिति संश्रयशब्देनाह, तद्गुणसंविज्ञानाच्च प्रस्तारोऽप्युच्यते । प्रस्तरणं विताननं लक्षणमङ्कसंख्येत्यर्थः । नष्टमिति स्वरूपेणैव न ज्ञातं संख्यया तु ज्ञातम्, उद्दिष्टं तु स्वरूपेण ज्ञातं न संख्यया । तज्ज्ञानोपायेन नष्टादयः सिद्धाः ।

## बालक्रीड़ा

(मूल) अब इन छन्दों की प्रस्तार विधि को अनुसरण करने वाले लक्षण अथ च नष्ट और उद्दिष्ट को कहूंगा । इनमें प्रस्तार दो तरह का होता है एक अक्षर निर्दिष्ट अर्थात् वार्णिक प्रस्तार दूसरा मात्रोक्त अर्थात् मात्रिक प्रस्तार है ।११२।

(मूल) द्विकौ ग्लौ यह और मिश्रौ यह भी वर्णोक्त है यानी वार्णिक प्रस्तार है और मात्रिक प्रस्तार है : इसका भाव यह है कि दो गुरु और एक लघु की अलग २ स्थापना करे । यह द्विकौ का प्रथम अर्थ है । इसमें पहला भेद एक गुरु का दूसरा भेद एक लघु का । इस तरह प्रथम भेद और द्वितीय भेद सिद्ध हुआ ।

इसके बाद द्विकौ का अर्थ है द्विरावृत्त । क्योंकि दो आवृत्ति है प्रमाण जिसका वह द्विक है । यहां संख्याया अतिशदन्तायाः कन् इस सूत्र से कन् प्रत्यय हुआ है । अतः द्विरावृत्त ग्लौ इसका अर्थ हुआ । यह दो अक्षर के प्रस्तार के लिए विधि हैं । उसमें पहले दो गुरुओं को रखे । फिर मिश्रौ च के अनुसार ऽ गुरु और । लघु को मिश्रित रखे जैसे यह प्रकार है ।

ऽऽ
।ऽ
ऽ।
।।

यहां एकवार दो गुरु और दो लघु को रखा । दूसरी वार एक गुरु और एक लघु को रखा । क्योंकि पहले भेद ऽऽ में यह गुरु गुरु से मिला दूसरे ।ऽ भेद में लघु गुरु से मिला । तीसरे ऽ। भेद में गुरु लघु से मिला । चौथे । भेद में लघु लघु से मिला इसी तरह यह प्रक्रिया २६ अक्षरों तक के प्रस्तार में होती है ।११३।

प्रस्तार जिसमें वृत्तों की संख्या गुरु लघु आदि सब कुछ है । इस बात को संश्रय शब्द से कहते हैं । प्रस्तार को यहाँ कहते हैं क्योंकि प्रस्तारविधिसंश्रयम् में तद्गुणसंविज्ञान बहुव्रीहि समास है । जैसे लम्बकर्णमानय कहने पर लम्बे कानों वाले व्यक्ति के साथ में लम्बे कान भी तो आते हैं उसी तरह प्रस्तार की विधि के सहारे किये जाने वाले प्रतिपादन में प्रस्तार भी आता है । प्रस्तरण का अर्थ है वितानन फैलाना या फैलाव ।१११।

गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ।
अग्रतस्तु समादेया गुरवः पृष्ठतस्तथा ॥ ११४ ॥

अभिनवभारती

तत्र वर्णगतो मात्रागतश्चेति प्रस्तारो द्विधा, तमुदाहरति। द्विकौ ग्लाविति वर्णसंख्यादिनियमेन यौ गुरू लघू द्विकौ संख्यापरिमाणौ तौ मात्रिकौ मात्रागणेषूक्तौ। अन्येनाधिकृतत्वादेकेन भेदेन मिश्रौ भवतः।११३।

अत्र प्रस्तारेऽप्युपायमाह गुरोरधस्तादिति। आद्यस्यैव गुरोरधो लघुः सर्वो न्यसनीयः। यत्र द्वौ भागौ मिश्रौ विषमसंख्यायां तदा द्विरिति भूयो भूयः। मात्राप्रस्तारो निरूप्यते। मात्रापरिकल्पितो यस्त्रिमात्रचतुर्मात्रादिः समूहो गणमात्रसंख्याया लघ्वक्षरसंख्यायाः, तत्र प्रथम प्रस्तार इत्याह पृथग्लक्षणीयोऽपि भागोऽत्र संख्यायास्तत्र गुरुः सर्वतो न्यसनीयः। यत्र तु द्वौ भागौ मिश्रौ, विषमसंख्यायां तत्राद्यो लघुरन्यो गुरुः शेषं वर्णप्रस्तारेण तुल्यम्। केवलं मात्रासंख्येति वचनाद् गणन्यासे पूर्वत्र मात्रा देया। यत्र वर्णप्रस्तारः तत्र विषमप्रस्तारेऽपि मात्रेत्युदाहृता एव।११४।

बालक्रीड़ा

(मूल) इसी द्विकौ ग्लौ और मिश्रौ च सूत्र के अर्थ की स्पष्ट व्याख्या करते हैं कि प्रस्तार के समय में आद्य गुरु के नीचे लघु का विन्यास करे। फिर उसके आगे गुरु रखे जैसे ऽऽ इस दो के प्रस्तार में हुआ है। जब ऽऽऽ तीन का प्रस्तार करेंगे तब ऽऽऽ आदि गुरु के नीचे लघु रखेंगे आगे गुरु रखेंगे। ऽऽ फिर पंक्ति में दूसरा गुरु आदि गुरु हुआ। इसके नीचे लघु रखेगें किन्तु उसके आगे और पीछे गुरु रखेंगे। जैसे। ऽऽ ऐसा विन्यास करते है। इन अक्षरों एवं मात्राओं के प्रस्तार में पहला भेद सर्व गुरु का अवसानज यानी

लक्षण माने अङ्क संख्या। नष्ट माने चला गया, जिस को स्वरूप से ही नही समझा है। उद्दिष्ट वह है जिसको स्वरूप से तो जान लिया किन्तु संख्या से नही समझा कि कितनी संख्या वृत्त की है। उनके ज्ञान में जानने में उपाय रूप से नष्टादि सिद्ध है निश्चित तथ्य है।११२।

यहां वर्णगत और मात्रागत जो दो प्रकार का प्रस्तार है उसका उदाहरण करते हैं द्विकौ ग्लाविति। वर्णों की संख्या आदि के नियम से जो द्विक अर्थात् द्वित्वसंख्या के परिमाण वाले गुरु और लघु हैं वे ही मात्रिक हैं अर्थात् मात्राओं की गणना में उपयुक्त होते हैं। एक दूसरे से एक दूसरा अधिकृत है अतः एक भेद से वे मिश्र हो जाते हैं।११३।

यहां प्रस्तार के विषय में भी उपाय को कहते हैं गुरु के अधः नीचे। पाद में पहले गुरु के नीचे सभी जगहों में लघु का विन्यास करना चाहिए। जहां विषम संख्या में। (मात्राप्रस्तार के विषय में) दो भाग मिले हुए रहते है जैसे तीसरा और चौथा वहां दो लघुओं का विन्यास करे इस प्रकार वार२ विन्यास करें ११४।

प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ।
वृत्तन्तु, सर्वछन्दस्सु प्रस्तारविधिरेव तु ॥ ११५ ॥
गुर्वधस्ताल्लघुं न्यस्य तथा द्विद्वि यथोदितम् ।
न्यस्येत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ॥ ११६ ॥
मात्रासंख्याविनिर्दिष्टो गणो मात्राविकल्पितः ।
मिश्रौ ग्लाविति विज्ञेयौ पृथक् लक्ष्यविभागतः ॥ ११७ ॥
मात्रागणो गुरुश्चैव लघुनी चैव लक्षिते ।
आर्याणां तु चतुर्मात्राप्रस्तारः परिकल्पितः ॥ ११८ ॥

अभिनवभारती

द्वितीयस्तु तदाह गुरुरिति जातावेकवचनं गुरू इत्यर्थः । लघुनी चकाराद् गुरू, तथा शब्दादन्यद्भेदत्रयम् ।११७। चतुर्मात्रा आर्याणां प्रस्तारे गणभेदः पञ्चदश इत्यर्थः, पञ्चमात्रोऽष्टधा, एवं षष्ठोऽत्र प्रस्तार्यातीत इति वर्णवृत्तेष्वेव च कृत इत्यर्थः । अन्यत्र तु मात्राकृतो गणविभागः तदपेक्षया गुरुलघुव्यवस्थानान्न स्वातन्त्र्येण ।११८।

बालक्रीड़ा

अन्तिम भेद सर्व लघु का होता है । सभी छन्दों में यह प्रस्तार विधि है । इसका आशय है कि पहला भेद सर्व गुरु का होता है। इसमें गुरु एवं लघु का विन्यास तब तक करे जब तक सर्वलघु का पाद न बन जाय । सीधा सरल श्लोक यह है—पादे सर्वगुरौ १ आद्याद् गुरोरधः लघुं न्यसेत् ।२ यथोपरि तथा शेषम् ।३ ऊने दद्याद् गुरूनेव ४ यावत्सर्वलघुर्भवेत् ।५।११४।११५।

(मूल) मात्रिक छन्दों में मात्राओं की संख्या के अनुसार गणका निर्देश होता है । अतः इसमें मात्राओं की कल्पना करके अलग २ लक्ष्यों के विभाग से द्विकौ ग्लौ एवं मिश्रौ ग्लौ इन सूत्रों का उपयोग करना चाहिए । क्योंकि मात्रा गण एक गुरु या दो मात्रा और दो लघु यानी दो मात्राओं से लक्षित होता है ।११६।११७।११८।

मात्रा प्रस्तार का निरूपण करते हैं । केवल गणों की संख्या का समूह जो मात्राओं के द्वारा त्रिमात्रा या चतुर्मात्रा के रूप में कल्पित है वहां लघु अक्षर की संख्या की अपेक्षा से प्रथम प्रस्तार है ऐसा कहते हैं । जहां संख्या के भाग का पृथक् विन्यास करना है वहां पहले सब जगह गुरु का विन्यास करना चाहिए । जहां दो भाग जैसे ३ रा और ४ था और ५ वां और ६ ठा मिले हुए है वहां विषम संख्या में पहला लघु दूसरा गुरु अवशिष्ट को वर्णप्रस्तार के तुल्य रखना चाहिए । केवल मात्रासंख्या ऐसा कहने से गण के न्यास में भी पहले मात्रा को देना चाहिए । जहां वर्ण प्रस्तार है वहां वर्ण करे । विषम प्रस्तार में मात्रा को देना चाहिए ऐसा बता ही दिया है ।

द्वितीय किसको रखें इस पर कहते हैं कि गुरुः । यह जाति में एक वचन है । अतः इसका अर्थ है कि गुरू यानी दो गुरु । लघुनी उर्थात् दो लघु । चकार से दो गुरु । तथा–शब्द से अन्य तीन भेद है ।११६।

**गीतकप्रभृतीनान्तु पञ्चमात्रो गणः स्मृतः ।**
**वैतालीयं पुरस्कृत्य षण्मात्राद्यास्तथैव च ॥ ११९ ॥**
**त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ।**
**मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ॥ १२० ॥**
**अन्त्याद् द्विगुणिताद्रूपात् द्विद्विरेकं गुरोर्हरेत् ।**
**द्विगुणाश्च लघोः कृत्वा संख्यां पिण्डेन योजयेत् ॥ १२१ ॥**

## अभिनवभारती

तत्रोद्दिष्टमाह द्विगुणितादिति वर्णवृत्तेष्वेव चेदं सर्वं मन्तव्यम्। (कमपि) भेदं पश्य; एकमङ्कं द्विगुणितं च दत्वा द्विद्विरिति भूयो द्विगुणितादपि द्विगुणितम् कृत्वान्त्यं परिसमाप्य गुरुसंबन्धिनोऽङ्कान् हरेत् पुंसयेत्। लघोः संबन्धिनोऽङ्कान् पिण्डीकृत्य तेन पिण्डेनातिक्रान्तेनैतावानयं भेद इति संख्यां निर्दिशेत्, यथा चतुरक्षरस्येदृशीं क्रियां कृत्वा भेदं वदेत् यत्र लघ्वङ्कगणनातिक्रान्ता ।१२१।

## बालक्रीड़ा

(मूल) आर्याओं में चार मात्राओं का प्रस्तार होता है। गीति वगैरह में पांच मात्राओं का प्रस्तार होता है ।११९।

(मूल) वैतालीय वगैरह में छ मात्राओं का होता है। तीन अक्षरों के छन्द से आरम्भ करके छब्बीस अक्षरों के छन्दों तक गुरु एवं लघु अक्षरों से समन्वित त्रिकों को समझना चाहिए। इसी तरह मात्रिक छन्दों का गणविभाग भी गुरु एवं लघु अक्षरों के आश्रय पर है ।१२०।

(मूल) द्वि द्विः। संख्या को दुगुना २ करे। दुगुना करने के बाद उस संख्या के अन्तिम द्विगुणितरूप वाले गुरु से एक को निकाल दे। फिर लघुस्थ द्विगुणित संख्या को पिण्डरूप में एकत्र जोड़ दे ।१२१।

आर्याओं के प्रस्तार में चार मात्रा वाला गण होता है। इसका अर्थ है कि आर्या में चार मात्रा के गणों के १५ भेद होते हैं। पञ्च मात्रा के गणों के आठ होते हैं। इस प्रकार षष्ठ मात्रा के गणों का भेद प्रस्तार से बाहर है। हाँ वर्णवृत्तों में ये भेद होते हैं। अन्य जगहों में तो मात्राकृत गणों का विभाग होता है और उसकी अपेक्षा से गुरु और लघु की व्यवस्था होती है अतः स्वतन्त्र रूप से नहीं होता है ।११८।

अब उनमें उद्दिष्ट को कहते हैं द्विगुणितादिति। वर्णवृत्तों में ही इन सबको मानना चाहिए। किसी एक भेद को देखिये। अङ्क को दिगुणित करके रखे फिर द्विगुणित से भी द्विगुणित करके अन्तिम अंक पर समाप्ति करे। उसके बाद गुरु अक्षर सम्बन्धी अंकों को पुंसित कर दे हटा दे। पुंस अभिवर्धने यह चुरादिगणीय धातु है। इसके लिङ का रूप है पुंसयेत् अर्थात् छेदयेत्। क्योंकि वर्धन का अर्थ छेदन और पूरण है प्रकरण के अनुसार कोई भी एक ले सकते हैं अतः यहाँ छेदन अर्थ है। इसके बाद लघु सम्बन्धी अंकों

आद्यं सर्वगुरु ज्ञेयं वृत्तन्तु समसंज्ञितम् ।
कोशे तु सर्वलघ्वन्त्यं मिश्ररूपाणि सर्वतः ॥ १२२ ॥
वृत्तानान्तु समानानां संख्यां संयोज्य तावतीम् ।
राश्यूनामर्धविषमां समासादभिनिर्दिशेत् ॥ १२३ ॥

अभिनवभारती

अथैकादिलघुज्ञानार्थं पीठं रचयति आद्यं सर्वगुर्वित्यादि । कोश इत्याद्यन्तयोर्मध्यगो भेदगणः । सोऽस्य लघोः संख्यया निश्चयः कुर्यात् । तद्यथा चतुरक्षरौ प्रथमान्तौ सर्वगुरुः सर्वलघुश्च, एकद्वित्रिलघवस्तु चतुःषट् चतुःप्रकाराः संक्षेपत इति एतदङ्क्यामिश्रणेन संख्या लभ्यते षोडशभेदाश्चतुरक्षरस्येति ।१२२।

संख्यास्थान उपायान्तरमाह एकादिकामिति । छन्दोऽक्षरोपरि एकद्विचत्वारीत्यदीनि निक्षिपेत् । तत्र पूर्वेणोत्तरस्य मिश्रणं कुर्यात् यावत्पर्यन्तं गणपिण्डस्तां

बालक्रीड़ा

(मूल) सम संख्या वाले सम संज्ञक वृत्त के आदि पाद को सर्व गुरु वाला और अन्तिम को सर्व लघु वाला समझना चाहिए । कोश यानी मध्यगत सभी पादों में मिश्ररूप समझें । अर्थात् सर्वादि और सर्वान्त पादों के मध्य के पादों में गुरु लघु मिश्रित रूप में होने चाहिए ।१२२।

(मूल) समान संख्या वाले वृत्तों की संख्या को उतने प्रकार से जोड़ दे । इसी तरह समास माने जोड़ी हुई संख्याओं में अर्धविषम संख्या वाले छन्दों में एक राशि को घटा कर अभिनिर्देश करे यानी बतलाना चाहिए ।१२३।

को जोड़कर उसमें एक मिलाकर कहना चाहिए यह भवदुद्दिष्ट भेद अमुक संख्या वाला है। जैसे चार अक्षर के उद्दिष्ट में ऐसी क्रिया करके भेद को कहे जहाँ लघु अक्षरों के अंकों की गणना अतिक्रमण कर जाती है ।१२१।

उद्दिष्ट की विधि यह है—पहले अक्षर से आरम्भ करे वह पहला अक्षर चाहे गुरु हो या चाहे लघु हो अन्तिम अक्षर पर्यन्त ऊपर ऊपर अङ्कों को द्विगुणित करके लिखे । अर्थात् पहले अक्षर के ऊपर एक द्वितीय अक्षर के ऊपर एक के दूने दो को, तृतीय पर दो के दूने चार ४ को चतुर्थ पर चार के दूने आठ को पञ्चम पर आठ के दूने १६ को लिखे । इस प्रकार द्विगुणित द्विगुणित अङ्कों को लिखना चाहिए । बाद में लघुस्थ अङ्कों को जोडकर योगफल में एक और अधिक जोड देना चाहिए । इस तरह जोडने पर जो संख्या होगी वही संख्या उद्दिष्ट की निर्दिष्ट छन्द की संख्या होगी ।

अब एकादिलघु के समझने के लिए पीठ की भूमि की रचना करते हैं आद्यं सर्व गुरु इत्यादि । पहला पाद सर्वगुरु का रखे । कोश शब्द का प्रकृत में अर्थ है प्रथम और अन्त के वीच का गण । यह कौन भेद है इसका निश्चय इसके लघुओं की संख्या से करना

**एकादिकां तथा संख्यां छन्दसो विनिवेश्य तु ।**
**यावत् पूर्णन्तु पूर्वेण पूरयेदुत्तरं गणम् ॥ १२४ ॥**
**समानां विषमाणां च संगुणय्य तथा स्फुटम् ।**
**राश्यूनामभिजानीयाद्विषमाणां समासतः ॥ १२५ ॥**

## अभिनवभारती

चैकादिकामेकेन मिश्रितं कुर्यादित्येवं समवृत्तानां संख्या। लघूनामित्थं षोडशभिर्गुणयेत्। ततो गुणराशेः षोडशसंख्यामवपातयेत्। तेन चतुरक्षरे विंशत्यधिकं शतमर्धसमवृत्तानां तामपि संख्यां गुणयित्वा गुणराशिं पातयेत्। तेन च सहस्राणीति शतान्यशीतिश्चेति चतुरक्षरे विषमवृत्तानि ।१२४।

## बालक्रीड़ा

(मूल) छन्द की एकादिक संख्या का क्रमशः निवेश करके जब तक पूरा नहीं हो तब तक पूर्व-पूर्व वाले गण से उत्तर-उत्तर वाले गण को पूरा करे ।१२४।

(मूल) इस प्रकार सम एवं विषम मात्राओं की संख्या को स्पष्ट रूप से गुणन करके समास करने के बाद विषम वृत्तों की राशि को ऊन करदे कम करदे तब भेद संख्या प्राप्त होगी ।१२५।

चाहिए। जैसे चार अक्षर का पाद है। जिसमें प्रथम में सभी गुरु हैं अन्तिम में सभी लघु हैं। बीच का कोई पाद एक लघु का है कोई दो लघु का है और कोई तीन लघु का है इस तरह चार छ एवं चार प्रकार संक्षेप से होते हैं। प्रथम भेद सर्वगुरु का एक भेद है, अन्तिम भेद सर्व लघु का एक भेद है, एक लघु के चार भेद है, दो लघु के छ भेद है, तीन लघु के चार भेद है, इस प्रकार १+४+६++४+१ इन अंकों के मिलाने से संख्या मिलती है कि चतुरक्षर छन्द के सोलह भेद होते हैं। १२२।

संख्या के ज्ञान के लिए दूसरा उपाय कहते है—एकादिकामिति। छन्द के अक्षरों के ऊपर एक दो चार इत्यादि को लिखे। उनमें पूर्व से उत्तर का मिलान कर दे। जहाँ तक गणों का पिण्ड है वहाँ तक संख्याओं का पूर्व से उत्तर का मिलान करे। फिर एकादिक संख्या को एक से मिश्रित करे इस प्रकार समवृत्तों की संख्या होती है। लघुओं को इस प्रकार सोलह से गुणा करे। फिर गुणा की हुई राशि से सोलह को घटा दे। इससे चार अक्षर के छन्द में विंशति अधिक जिसमें हैं ऐसे सौ संख्या अर्ध समवृत्तों की होती हैं। उस संख्या को भी गुणा कर के गुणित राशि से घटा दे। इससे सहस्र शत (यानी एक लाख) और अस्सी इतने चार अक्षर के विषम वृत्त होते हैं ।१२४।

छन्द के किसी भी भेद में एक गुरु वाले एवं दो गुरु वाले या तीन गुरु वाले इत्यादि कितने भेद हैं इसको जानने की विधि एकद्वयादिलग क्रिया होती है। उसका स्वरूप यह है।

एवं कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
क्रमान्नैधनमेकैकं प्रतिलोमं विसर्जयेत् ॥ १२६ ॥
सर्वेषां छन्दसामेवं लघ्वक्षरविनिश्चयम् ।
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा ॥ १२७ ॥
वृत्तस्य परिमाणन्तु छित्वाऽर्धेन यथाक्रमम् ।
न्यसेल्लघु तथा सैकमक्षरं गुरु चाप्यथ ॥ १२८ ॥

## अभिनवभारती

अथ नष्टमाह वृत्तस्य परिमाणं त्विति संख्यामर्धेन छिन्द्यात्। यत्र विषमाङ्कं न पूर्यते तत्र पूरणार्थमेकमधिकं कुर्यात् । तदाह यथाक्रममिति । तत्र गुरु।

## बालक्रीड़ा

(मूल) इस प्रकार सभी जगहों में उत्तर वाली संख्या को पूर्व वाली संख्या से पूरण करके क्रमशः अन्तिम संख्या में एक-एक को विपरीत प्रक्रिया से विसर्जित करके हटा दे ।१२६।

(मूल) इस प्रकार समवृत्त सभी छन्दों के लघु अक्षरों को तथा संख्या को संक्षेप से निश्चय पूर्वक जानें ।१२७।

(मूल) वृत्त के परिमाण को यानी सम्पूर्ण भेदों को आधा करके क्रमशः एक लघु

वर्णान् वृत्तभवान् सैकान् । औत्तराधर्यतः स्थितान् । एकादिक्रमतश्चैतान् उपर्युपरि निक्षिपेत् । उपान्त्यतो निवर्त्तेत । त्यजन्नेकैकमूर्ध्वतः । उपान्त्यतो निवर्त्तेत त्यजन्नेकै कमूर्ध्वतः । उपर्याद्याद् गुरोरेवमेकाद्वयादिलगक्रिया इस प्रक्रिया को अपने गुरु से समझें ।

अब नष्ट को कहते हैं—वृत्तस्य परिमाणन्तु । वृत्त के परिमाण को तो । प्रश्नित छन्द की संख्या को आधा काट दे । जहाँ विषमाङ्क है पूरा नहीं होता है और विना पूरा हुए कटेगा नहीं अतः पूरण करने के लिए उसमें एक और अधिक जोड़ दे । कैसे पूरा करे और कैसे जोड़े इसके लिए कहते हैं कि यथाक्रमम् जैसा क्रम हो वैसा करे । उस क्रम में विषम संख्या में एक अधिक कर दे । अर्थात् विषम संख्या का आधा नहीं हो सकता है अतः उसमें एक मिला कर आधा करे । इस पर समझाते हैं कि इस प्रक्रिया के करने में प्रयत्न में गौरव होता है अतः जहाँ विषम संख्या में एक मिला कर आधा करने की स्थिति हो वहाँ गुरु लेना । अन्यथा माने जहां एक आधा नहीं करना पढ़े अतएव जहां प्रयत्न में गौरव नहीं होता है वहां पर आधा करने पर लघु लेना । इसी प्रक्रिया को पुनः पुनः तब तक करे जब तक वृत्त के अक्षर पूर्ण नहीं हो जाँय ।

अब प्रश्न होता है कि चतुरक्षर वृत्त में पाँचवाँ भेद कैसा । उत्तर । यहां ५ यह विषम संख्या है इस को आधा करने के लिए एक मिलायेंगे तब आधा होता । इस तरह

एवं विन्यस्य वृत्तानां नष्टोद्दिष्टविभागतः ।
गुरुलघ्वक्षराणीह सर्वछन्दस्सु दर्शयेत् ॥ १२९ ॥
इति छन्दांसि जातानि मयोक्तानि द्विजोत्तमाः ! ।
वृत्तान्येतेषु नाट्येऽस्मिन् प्रयोज्यानि निबोधत ॥ १३० ॥

## अभिनवभारती

सैककरणात्प्रयत्नगौरवात् लघुरन्यथा च्छेदनात् । एवं पुनः पुनर्यावदक्षराणि पूर्णानि तावत् । चतुरक्षरे पञ्चमो भेदः कीदृगिति—पूर्वं पञ्चाङ्कस्य सैकच्छेदात् गुरु, पुनरपि त्र्यङ्कस्य सैकच्छेदात् गुरु, द्वयोश्च समच्छेदाल्लघु एकस्य सैकच्छेदाद् गुरु, एतेनेदृशः पञ्चमो भेदः ।१२९।

एतदुपसंहरन्नध्यायान्तरमासूत्रयति एवमिति । व्याकृतेन विभागेन लघुप्रधानानि वा गुरुप्रधानानि वा लक्ष्ये निवेशयेत् कविरुपबध्नीयादिति शिवम् ।१३०।

## बालक्रीड़ा

और एक गुरु को रखे । इस तरह विन्यास करके नष्ट एवं उद्दिष्ट की प्रक्रिया से सभी छन्दों में गुरु एवं लघु अक्षरों को दिखा दे ।१२८।१२९।

(मूल) हे उत्तम द्विजो ! इस प्रकार मैंने आप लोगों को छन्द बतला दिये हैं इन्हीं का इस नाटक में प्रयोग होता है ऐसा आप समझें ।१३०।

प्रयत्न गौरव होने से गुरु वर्ण प्राप्त होगा । इसीको लिखते हैं कि पहले विषम पञ्च अंक को सैक करके छेद करने से गुरु मिला । पुनः इस पांच अंक में एक मिलाने से बने हुए छ को आधा करने पर जो मिले वे भी विषम ३ अंक मिले । इसमें भी आधा करने के लिए एक मिलाना पड़ता है अतः नियम के अनुसार विषम ३ अंक को सैक करके आधा करने पर एक गुरु और मिला। इस तरह ऽ ऽ दो गुरु हुए या हो गये। इस तरह विषम तीन अंक में एक मिलाने से बने हुए ४ को आधा करने पर जो अङ्क मिला वह २ अंक सम है । उसको आधा करने पर प्रयत्न गौरव के अभाव में एक लघु मिला । इस तरह दो गुरु एक लघु मिला । किन्तु अभी वृत्त की संख्या पूर्ति नही हुई अतः बची हुई एक संख्या में पुनः एक मिलाना पड़ा यहां विषम को एक मिलाकर आधा किया है अतः नियम के अनुसार एक गुरु और मिला । इस तरह दो गुरु एक लघु पुनः गुरु ऐसा ऽ ऽ । ऽ चार अक्षर में पांचवाँ भेद हुआ ।१२८।

नष्ट की विधि यह है । नष्ट माने छन्द के स्वरुप का ज्ञान नही है कि ५ अक्षर वाले छन्द का ८ वां भेद कैसा है उस की जानकारी के लिए यह उपाय है । नष्ट का अङ्क यदि सम यानी २।४।६।८।१० इत्यादि हो तो उसके स्थान पर लघु और यदि विषम ३।५। ७।९।११ इत्यादि होतो गुरु लिखना चाहिए । इसके बाद नष्ट के अज्ञात स्वरूप वाले छन्द के अङ्क को आधा करे । आधा करने पर सम अङ्क आवे तो लघु और विषम आवे तो गुरु । इस प्रक्रिया को तब तक करना चाहिए जब तक नष्ट की संख्या की पूर्त्ति न हो जाय ।

इति भरतीये नाट्यशास्त्रे वाचिकाभिनये च्छन्दोविधानं नाम
चतुर्दशोऽध्यायः ।

## अभिनवभारती

पार्वतीवदनाम्भोजभृङ्गनेत्रत्रयीभुवः ।
दासोऽभिनवगुप्ताख्यश्छन्दोऽध्यायमपप्रथत् ।

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायामभिनवभारत्यां नाट्यवेद-विवृतौ छन्दोऽध्यायश्चतुर्दशः समाप्तिमगमत् ॥

## बालक्रीड़ा

आचार्य मधुसूदनशास्त्री की मूल नाट्यशास्त्र की बालक्रीड़ा हिन्दी टीका समाप्त हुई ।

अब इसके बाद इस प्रकृत अध्याय का उपसंहार करते हुए अध्यायान्तर का आसूत्रण करते हैं एवमिति । इस प्रकार किये गये विशिष्ट विभाग के अनुसार लक्ष्य में प्रबन्ध में लघु प्रधान अक्षरों का या गुरुप्रधान अक्षरों का निवेश करे अर्थात् कवि अपने प्रबन्ध में निबन्धन करे । इति शिवम् यह अध्याय समाप्ति में मङ्गल है ।१३०।

पार्वती के मुख रूपी कमल का भृङ्ग भूत तीन नेत्रों की भूमि अर्थात् भगवान् त्रिनेत्र शम्भु के दास अभिनवगुप्त (नामक) ने इस छन्दोऽध्याय को प्रसिद्ध किया यानी विवृति के द्वारा लोक में प्रख्यात कर दिया ।

इस प्रकार महामहेश्वर आचार्य अभिनव गुप्त की बनाई हुई नाटचवेद की विवृति अभिनव भारती में चौदहवाँ छन्दोऽध्याय समाप्त हुआ ।

इस तरह नाटचवेद की विवृति अभिनव भारती के हिन्दी अनुवाद के रूप में आचार्य मधुसूदनशास्त्री की कृति बालक्रीडा चौदहवें अध्याय की सम्पूर्ण हुई ।

---

## अथ पञ्चदशोऽध्यायः ।

छन्दांस्येवं हि यानीह मयोक्तानि द्विजोत्तमाः !
वृत्तानि तेषु नाट्येऽस्मिन्प्रयोज्यानि निबोधत ॥ १ ॥
आद्ये पुनरन्त्ये द्वे द्वे गुरुणी चेत् ।
सा स्यात्तनुमध्या गायत्रसमुत्था ॥ २ ॥

### अभिनवभारती

समस्तवृत्तानि विना न येन पटूद्भवश्रोत्ररसायनेन ।
छन्दांसि यस्मात्प्रभवन्ति वन्दे तं वाङ्मयं रूपमिहाष्टमूर्तेः ॥

यदुक्तमक्षराणि निवेशयेदिति (१४–१३३) तत्र श्रव्यताकृतं प्रविभागमाख्यातुमुपचक्रमे छन्दांस्येवमिति । एषां छन्दसां नाट्यप्रयोगयोग्यानि वृत्तानि निबोधतेति संबन्धः । गुरुलघुनियमेन श्रव्यता वर्तते येषु तानि वृत्तानि, श्रव्यार्थत्वात्, अधिकरणे क्तः ।१। गायत्रीत आरभ्य प्रयोगार्हतेति पूर्वाध्याये निरूपितत्वात् तदुपक्रम-

### बालक्रीड़ा

(मल) हे द्विजोत्तमो ! इस अध्याय में जिन छन्दों की प्रस्तारविधि मैंने आप को बतलायी है । उन छन्दों में से इस नाट्य में प्रयोग करने के योग्य वृत्तों को अब आप लोग मुझ से समझें ॥१॥

(मूल) जहाँ आद्य में दो गुरु फिर अन्त में दो गुरु और मध्य में दो लघु रहें वह तनुमध्या होगी । यह वृत्त गायत्री से समुत्थ है आरब्ध है । पहले चौदहवें अध्याय में कहा है कि उक्तादि उत्कृत्यन्त २६ अक्षरों तक के वृत्तों को हमने कहा है किन्तु प्रयोग के

पटूद्भव । यहाँ पटूद्भव में पटु यह भाव प्रधान निर्देश है । अतः यस्मात् क्योंकि पटुत्वेन सुन्दरतया अर्थात् राग रागिणी एवं शृंङ्गारादि रसों से संवलित होने के कारण सुन्दरता से जिसका उद्भव होता है यानी उच्चारण किया जाता हे अत एव कानों को रसायन की तरह आप्यापित करने वाले जिस वाङमय के विना छन्दोघटित समस्त वृत्त पैदा नहीं हो सकते हैं उस अष्टमूर्त्ति शम्भु के वाङमय रूप की स्तुति एवं वन्दना मैं अभिनव गुप्त करता हूँ ।

जैसा कि पहले कहा है "कवि को काव्यों में अक्षरों का निवेश उपनिबन्धन करना चाहिए" उस निवेश की श्रव्यता के लिए यानी उस निवेश को श्रोत्र रसायन बनाने के लिए शब्दों के प्रकृष्ट विभाग को कहने का उपक्रम करते हैं । छन्दांसि—इन छन्दों से बने हुए नाटच में प्रयोग करने के योग्य वृत्तों को समझना चाहिए यह अन्वय है । प्रश्न—किन वृत्तों को समझना चाहिए । उत्तर । जिनमें गुरु एवं लघुओं के नियम के बदौलत श्रव्यता रहती है ऐसे वृत्तों को समझना चाहिए । क्योंकि ये वृत्त सुनाने के लायक हैं या सुनने के लायक हैं । यहाँ अधिकरण में क्त प्रत्यय है ॥१॥

यथा—संत्यक्तविभूषा भ्रष्टाञ्जननेत्रा ।
हस्तार्पितगण्डा किं ? त्वं तनुमध्या ॥ ३ ॥
लघुगण आदौ भवति चतुष्कः ।
गुरुयुगमन्त्ये मकरकशीर्षा ॥ ४ ॥
यथा—स्वयमुपयान्तं भजसि न कान्तं ।
भयकरि किं ? त्वं मकरकशीर्षा ॥ ५ ॥
एकमात्रं षट्के स्याद् द्वितीयं पादे ।
ख्यातरूपा वृत्ते मालिनी सा नाम्ना ॥ ६ ॥

### अभिनवभारती

मेवाह आद्ये पुनरिति, मध्ये तु लघुनी अर्थात् । गायत्र्यैव गायत्रम् । तत्रेहाध्याये भरतमुनिकृतमिति त्रिकैर्मकारादिभिः कैश्चित्किञ्चिल्लक्षणं स्वीकृतमिति द्विविधः पुस्तकपाठो दृश्यते मध्ये च चिन्तनाय पुस्तकेषूभयमपि पठ्यत इति ॥२॥

एतन्नाम्ना प्रसिद्धा ख्यातरूपा श्लाघनीयेत्यर्थः ॥६॥

### बालक्रीड़ा

के योग्य वृत्त उनमें छ अक्षरों वाली गायत्री से ही आरम्भ किये जाते हैं अतः कहा कि गायत्र-समुत्था । गायत्री से ही गायत्र हुआ है ॥२॥

(मूल) जैसे—विभूषणों का त्याग करने वाली तथा जिसके नेत्रों से अञ्जन हट गया है ऐसी और हथेली पर कपोल को रखे हुए चिन्ता मुद्रा में बैंठी हुई क्या तुम तनुमध्या हो ॥३॥

(मूल) जिसके आरम्भ में चार लघुओं वाला गण हो और अन्त्य में दो गुरु हों वह मकरकशीर्षा वृत्त है ॥४॥

(मुल) जैसे—स्वयं प्रेम से आने वाले कान्त का तुम आलिङ्गन नहीं करती हो अतः हे भयकरि ! डराने वाली ! क्या तुम मकरकशीर्षा हो मगर मच्छ की तरह शिर वाली हो जिसको देख कर डर लगता है ॥५॥

(मूल) (षट्के पादे) छ अक्षरों वाले पाद में (द्वितीयमक्षरम्) दूसरा अक्षर (एक

छ अक्षरों वाले छन्द गायत्री से आरम्भ करके २६ अक्षरों वाले छन्द उत्कृति पर्यन्त प्रयोग के योग्य है "इस तथ्य को पूर्व चौदहवें अध्याय में कह दिया है" अतः उसी का उपक्रम करते हैं कि आद्य में और अन्त्य में दो गुरुओं का विन्यास करे इस कथन से अर्थात् मध्य में दो लघुओं का विन्यास करे ऐसा प्राप्त हो गया । गायत्र्या एव गायत्रम् में तेन निर्वृतम् से अण् प्रत्यय हुआ है अतः गायत्री से जो सम्पन्न हुआ वह गायत्र है । यहां इस अध्याय में कुछ लक्षण भरत मुनि के किये हुये हैं और कुछ लक्षण मकरादि त्रिकों से किन्हीं लोगों ने स्वीकार किये हैं अतः दो तरह का पाठ पुस्तक में दिखाई देता है और चिन्तन करने के लिए पुस्तकों के मध्य में दोनों को पढ़ते हैं ॥२॥

षडक्षरकृते पादे लघु यत्र द्वितीयकम् ।
शेषाणि तु गुरूणि स्युर्मालिनो सा मता, यथा ॥ ७ ॥
स्नानगन्धाधिक्यैर्वस्त्र भूषायोगैः ।
व्यक्तमेवासौ त्वं मालिनी प्रख्याता ॥ ८ ॥
द्वितीयं पञ्चमं चैव लघु यत्र प्रतिष्ठितम् ।
शेषाणि च गुरूणि स्युर्मालती नाम सा, यथा ॥ ९ ॥
शोभते बद्धया षट्पदाविद्धया ।
मालतीमालया मानिनी लीलया ॥ १० ॥
द्वितीयं च चतुर्थं च पञ्चमं च यदा लघु ।
यस्याः सप्ताक्षरे पादे ज्ञेया सा तूद्धता, यथा ॥ ११ ॥
सौं त्रिकौ यदि पादे ह्यन्तिमश्च गकारः ।
उष्णिगुत्थितपादा उद्धता खलु नाम्ना ॥ १२ ॥

बालक्रीड़ा

मात्रं स्यात्) एक मात्रा वाला अर्थात् लघु और शेष अन्य अक्षर गुरु जहाँ हों वह मालिनी नाम से ख्यात रूप वाला वृत्त है अर्थात् वह मालिनी वृत्त है ॥६।७॥

(मूल) गन्ध जिसमें अधिक है ऐसे जल से स्नान करके अधिक मूल्यों वाले वस्त्र एवं आभूषणों को धारण करती हो इससे स्पष्ट है कि तुम ही प्रसिद्ध मालिनी हो ॥८॥

(मूल) जहाँ द्वितीय एवं पञ्चम अक्षर लघु हो और बाकी के अक्षर गुरु हों वह मालती नाम वाला वृत्त है ॥९॥

(मूल) जो मानिनी लीला पूर्वक गुंथी हुई एवं भौरों से आक्रान्त मालती माला से शोभायमान है वह मालती है ॥१०॥

(मूल) जिसके सात अक्षरों वाले पाद में जब दूसरा चौथा एवं पाँचवाँ अक्षर लघु और अन्तिम गुरु हों उसे उद्धता समझना चाहिए ॥११॥

(मूल) जहाँ पहला त्रिक ल मध्य र यानी मध्यलघु वाला रगण रूप हो दूसरा त्रिक अन्त्य गुरु स यानी अन्त्य गुरु वाला सगण रूप हो और अन्त में एक अक्षर गुरु हो वह उष्णिक् से उत्थित बनी हुई है और नाम से उद्धता है । अर्थात् उद्धता नाम वाला उष्णिक् जाति का वृत्त है ॥१२॥

आचार्य अभिनव गुप्त ने लिखा है कि यहाँ पन्द्रहवें अध्याय में त्रिक कह कर भरत मुनि ने वृत्तों के लक्षण कहे हैं और कुछ आचार्यों ने मगण आदि से लक्षण कहे हैं अतः दो प्रकार का पाठ है । अर्थ उनका एक ही है ।

मालिनी इस नाम से ख्यात रूपा है प्रसिद्ध है अर्थात् श्लाघनीया है ॥६॥

दन्तकुन्तकृतास्त्रं व्याकुलालक शोभम् ।
शंसतीव तवास्यं निर्दयं रतयुद्धम् ॥ १३ ॥
आदौ द्वे निधने चैव गुरुणी यत्र वै सदा ।
पादे सप्ताक्षरे ज्ञेया नाम्ना भ्रमरमालिका ॥ १४ ॥
पादे यदि निविष्टौ सम्यग्विरचितौ त्सौ ।
अन्त्ये यदि गकारः सा तु भ्रमरमाला ॥ १५ ॥
यथा—नानाकुसुमचित्रे प्राप्ते सुरभिमासे ।
एषा भ्रमति मत्ता कान्ते भ्रमरमाला ॥ १६ ॥
आद्यं तृतीयमन्त्यं च पञ्चमं सप्तमं तथा ।
गुरूण्यष्टाक्षरे पादे सिंहलेखेति सा, यथा ॥ १७ ॥
जातु यस्य गा न, पादे संस्थितः समस्वरूपे ।
तामनुष्टुभाश्रयस्थां वावदन्ति सिंहलेखाम् ॥ १८ ॥
यत्त्वया ह्यनेकभावैश्चेष्टितं रहः सुगात्रि ! ।
तन्मनो मम प्रविष्टं वृत्तमत्र सिंहलेखम् ॥ १९ ॥

अभिनवभारती

त्वया यन्मदीयं मनः प्रविष्टं व्याप्तमाक्रान्तं तत्सिंहनखविलेखनसदृशं जातम् । तादृशं वृत्तं तद्यथाक्रान्तम् ॥१९॥

बालक्रीड़ा

(मूल) जिसके दाँत कुन्त नामक शस्त्र का काम कर रहे हैं और जो बिखरे हुए अलकों से सुशोभित है ऐसा यह तुम्हारा मुख निर्दय रतयुद्ध को मानों कह रहा है ॥१३॥

(मूल) जहां सप्त अक्षर वाले पादों में आदि एवं अन्त में दो गुरु सदा रहे और बाकी अक्षर लघु रहें वह नाम से भ्रमरमालिका वृत्त है ॥१४॥

(मूल) जहाँ पाद के आरम्भ में छन्द की प्रक्रिया से विरचित तगण एवं सगण का सुन्दरता के साथ निवेश हो और अन्त्य में यदि गुरु हो तो वह भ्रमरमालिका होती है ॥१५॥

(मूल) जैसे—नाना पुष्पों से चित्र एवं अनेक वर्ण वाले सुरभिमास में मस्त हुई यह भ्रमर माला घूम रही है ॥१६॥

(मूल) जहाँ आठ अक्षरों वाले पाद में पहला तीसरा, पांचवाँ, सातवाँ एवं आठवाँ अक्षर गुरु हो वह सिंहलेखा है ॥१७॥

(मूल) जिसके प्रत्येक पाद में सम स्थान में गुरु अक्षर संस्थित नहीं हो यानी दूसरा चौथा एवं छठवां अक्षर गुरु नहीं हो उसको अनुष्टुप् के आश्रय में रहने वाली सिंहलेखा कहते हैं ॥१८॥

(मूल) सुगात्रि ! तुमने जो एकान्त में अनेक भावों से युक्त चेष्टाएँ की उससे मेरे मन में यह तथ्य प्रवेश कर गया है कि यहां सिंहलेख नामक वृत्त है आचरण है ॥१९॥

चतुर्थं च द्वितीयं च षष्ठमष्टममेव च।
गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् ॥ २० ॥
यदा तु जात्परौ रलौ गकार एव च स्थितः।
अनुष्टुबुद्भवं तदा वदन्ति मत्तचेष्टितम् ॥ २१ ॥
यथा—चरावघूर्णितेक्षणं विलम्बिताकुलालकम् ।
असंस्थितैः पदैः प्रिया करोति मत्तचेष्टितम् ॥ २२ ॥
अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि ।
गुरूणि यस्मिन्सा नाम्ना विद्युन्मालेति कीर्तिता ॥ २३ ॥
मौ गौ चान्त्यौ यस्याः पादे पादस्यान्ते विच्छेदश्च।
सा चानुष्टुप्छन्दस्युक्ता नित्यं सद्भिर्विद्युन्माला ॥ २४ ॥
साम्भोभारैरानदद्भिः श्यामाम्भोदैर्व्याप्ते व्योम्नि ।
आदित्यांशुस्पर्धिन्येषा दिक्षु भ्रान्ता विद्युन्माला ॥ २५ ॥

बालक्रीड़ा

(मूल) जहाँ आठ अक्षरों वाले पाद में द्वितीय चतुर्थ षष्ठ और अष्टम अक्षर गुरु हो वह मत्तचेष्टित वृत्त है ॥२०॥

(मूल) जब तो जगण के बाद रगण तथा लघु और गुरु स्थित हों तब अनुष्टुप् से पैदा होने वाले वृत्त को मत्तचेष्टित कहते हैं ॥२१॥

(मूल) जैसे– जिसके ईक्षण नेत्र चञ्चल एवं घूर्णित हो तथा अलक जुल्फियाँ इधर उधर बिखरी हुई एवं लम्बायमान हो ऐसी प्रिया असंस्थित पदों से अर्थात् एक जगह पर नहीं पड़ने वाले पैरों से मत्त चेष्टित करती है ॥२२॥

(मूल) जहाँ आठ अक्षरों वाले पाद में सभी अक्षर गुरु हों वह विद्युन्माला नाम से कही जाती है ॥२३॥

(मूल) जिसके पाद में दो मगण रहें और अन्तिम अक्षर दो गुरु हों तथा पाद के अन्त में विच्छेद हो यानी यति हो उसको विद्वानों ने अनुष्टुप् छन्द में अवश्य विद्युन्माला कहा है। इसका मो मो गो गो विद्युन्माला ऐसा लक्षण वृत्तरत्नाकरकार ने लिखा है ॥२४॥

(मूल) जल के भार से झुके हुए और गर्जन कर रहे मेघों से व्याप्त आच्छादित आकाश में आदित्य की किरणों से स्पर्धा करने वाली यह विद्युन्माला दिशाओं में भ्रमण कर रही है ॥२५॥

तुमने जो मेरे मन में प्रवेश कर लिया है "व्याप्त हो गई हो या मन को आक्रान्त किया है वह सिंह के द्वारा किये गये नखविलेखन के सदृश है इस लिए उस तरह का यह वृत है यानी उसी प्रकार यह वृत्त भी चित्त को आक्रान्त कर लेता है ॥१९॥

पञ्चमं सप्तमं चान्त्यं गुरु पादेऽष्टके तथा ।
छन्दोज्ञैर्ज्ञेयमेतत्तु वृत्तं चित्तविलासितम् ॥ २६ ॥
स्मितवशविप्रकाशैर्दशनपदैरमीभिः ।
वरतनु ! पूर्णचन्द्रं तव मुखमावृणोति ॥ २७ ॥
नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च ।
गुरूणि यस्याः सा नाम्ना ज्ञेया मधुकरी यथा ॥ २८ ॥
षडिह यदि लघूनि स्युर्निधनगतमकारश्चेत् ।
बुधजनबृहतीसंस्था भवति मधुकरी नाम्ना ॥ २९ ॥
कुसुमितमभिपश्यन्ती विविधतरुगणैश्छन्नम् ।
वनमतिशयगन्धाढ्यं भ्रमति मधुकरी हृष्टा ॥ ३० ॥
दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका ॥ ३१ ॥
त्रीण्यादौ यदि हि गुरूणि स्युश्चत्वारो यदि लघवो मध्ये ।
पङ्क्तावन्तगतमकारः स्याद्विज्ञेया कुवलयमालाख्या ॥ ३२ ॥

## बालक्रीड़ा

(मूल) आठ अक्षर वाले पाद में पञ्चम सप्तम एवं अन्तिम अक्षर गुरु हों उसे छन्द के जानकार लोगों को मत्तविलासित वृत्त जानना चाहिए ॥२६॥

(मूल) हे वरतनु ! स्मित के कारण चमकने वाले इन दशनों के द्वारा तुम्हारे मुख ने पूर्णचन्द्र को छोप लिया है ।:२७॥

(मूल) जिस जाति के नो अक्षर वाले पाद में अन्तिम तीन अक्षर गुरु हों उसको मधुकरी नाम से जानना चाहिए ॥२८॥

(मूल) हे बुधवर ! यहाँ आरम्भ में छ लघु हों और अन्त में अगर मगण हो तो वृहती जाति में मधुकरी नाम से वृत्त होगा ॥२९॥

(मूल) विविध तरुगणों से घिरे हुए कुसमित अत एव अतिशय गन्ध से युक्त वन को देखकर मस्त मधुकरी घूम रही है ॥३०॥

(मूल) जिस जाति के दश अक्षरों वाले पाद में आदि के तीन अक्षर और अन्त के तीन अक्षर गुरु हों तथा मध्य के चार अक्षर लघु हों उसको उत्पलमालिका पंक्ति समझना चाहिए ॥३१॥

(मूल) पंक्ति नामक जाति के दश अक्षर वाले पाद में आदि के तीन अक्षर गुरु हों और मध्य के चार अक्षर लघु हों तथा अन्त में मगण हो उसे कुवलयमाला नामक वृत्त जानें ॥३२॥

यथा—अस्मिंस्ते शिरसि तदा कान्ते वैडूर्यस्फटिकसुवर्णाढ्ये।
शोभां स्वां न वहति तां बद्धा सुश्लिष्टा कुवलयमालेयम् ॥ ३३ ॥
द्वितीयं च चतुर्थं च षष्ठमष्टममेव च।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी ॥ ३४ ॥
जौं त्रिकौ हि पादगौ तु यस्या गौं च संश्रितौ तथा समौ स्तौ।
पङ्क्तियोग सुप्रतिष्ठिताङ्गी सा मयूरसारिणीति नाम्ना ॥ ३५ ॥
यथा—नैव तेऽस्ति संगमो मनुष्यैर्नापि कामभोगचिह्नमन्यत्।
गर्भिणीव दृश्यसे ह्यनार्ये! किं मयूरसारिणी त्वमेवम् ॥ ३६ ॥

### अभिनवभारती

श भां स्वाम् (स्वभाववर्तने ये भेदाः ?) वैडूर्यच्छायानि यानि दलानि तत्तत्स्फुरत्सुवर्णतुल्यानि वर्णानि तदभ्यन्तरकेसराणि ॥३३॥ मयूरवद् व्याकोचमस्याः, मयूरीभिर्वा (सारी) गतिविशेषो भवतीत्याहुः ॥३६॥

### बालक्रीड़ा

(मूल) जैसे—हे कान्ते ! इस तुम्हारे शिर में बँधी हुई यह वैदूर्यमणि की तरह स्फुरित खिले हुए सुन्दर वर्ण माने किञ्जल्कों से आढ्य एवं गुँथी हुई कुवलयमाला अपनी शोभा को धारण नहीं करती है ॥३३॥

(मूल) जिस जाति के दश अक्षरों वाले पाद में द्वितीय चतुर्थ षष्ठ एवं अष्टम अक्षर ह्रस्व हो तथा पहला तीसरा पाँचवाँ सातवां नववाँ एवं दशवां गुरु हो वह शिखरिणी है ॥३४॥

(मूल) जिस जाति के पाद में रगण जगण एवं रगण नामक त्रिक हों और अन्त में गुरु हो वह पंक्ति के योग से सुप्रतिष्ठित अङ्गों वाली मयूरसारिणी है ॥३५॥

(मूल) जैसे—हे अनार्ये ! न तो तुम्हारा मनुष्यों से सङ्गम है और न कुछ काम भोग के चिह्न हैं किन्तु गर्भिणी जैसी मालूम पड़ती हो अतः तुम मयूरसारिणी हो ॥३६॥

स्वभाव के अपने स्वरूप के वर्त्तन में व्यवहार में जिसके भेद होते हैं जिसके प्रकार बन जाते हैं उस शोभा को (न वहति) नहीं धारण करते हो। वैदूर्य के जैसी छाया वाले कान्ति वाले जो दल हैं उनके सुवर्ण की तरह चमकते हुए केशर है। यहां वर्णानि नपुंसक लिखा है यह केशर का वाचक है अतः नपुंसक है। रंग एवं ब्राह्मणादि का वाचक वर्ण पुंलिङ्ग है ॥३३॥

मयूर की तरह व्याकोच युक्त विकसित इसका स्वरूप है अतएव मयूरियों की तरह सारी (उच्चारण की) विशेष गति दशा इसमें होती है अतः यह छन्द मयूरसारिणी है ऐसा विद्वान् लोग कहते हैं ॥३५॥

आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत् ।। ३७ ।।
भौ तु भगाविति यस्य गणाः स्युः स्याच्च यतिस्त्रिचतुर्भिरथाऽस्मिन् ।
त्रैष्टुभमेव हि तत्खलु नाम्ना दोधकवृत्तमिति प्रवदन्ति ।। ३८ ।।
यथा—प्रस्खलिताग्रपदप्रविचारं मत्तविघूर्णितगात्रविलासम् ।
पश्य विलासिनि ! कुञ्जरमेतं, दोधकवृत्तमयं प्रकरोति ।। ३९ ।।
आदौ द्वौ पञ्चमं चैवाप्यष्टमं नैधनं तथा ।
गुरूण्येकादशे पादे यत्र तन्मोटकं, यथा ।। ४० ।।
एषोऽम्बुदनिस्वनतुल्यरवः क्षीबः स्खलमानविलम्बगतिः ।
श्रुत्वा घनगर्जितमद्रितटे वृक्षान् प्रतिमोटयति द्विरदः ।। ४१ ।।
नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु ।
एकादशाक्षरे पादे इन्द्रवज्रेति सा यथा ।। ४२ ।।

### अभिनवभारती

मन्दं मन्दं दोधकेन गीयमानं वृत्तं दोधकवृत्तम् ।।३९।।
एष इति यावन्मुरजघाततुल्यं गर्जितं श्रुत्वा ।।४१।।

### बालक्रीड़ा

(मूल) जहाँ त्रिष्टुप् जाति के एकादश अक्षर वाले छन्द के पाद में पहला चौथा सप्तम दशम और अन्तिम ग्यारहवाँ अक्षर गुरु हो वह दोधक वृत्त है ।।३७।।

(मूल) जिस छन्द में तीन भगण हो और अन्त में दो गुरु हों तथा तीन एवं चार पर यति हो उसको त्रिष्टुप् जाति वाला दोधक वृत्त कहते हैं ।।३८।।

(मूल) जैसे—देखो हे विलासिनि ! यह हाथी दोधक वृत्त के सदृश प्रस्खलित अग्र पादों से विचरण करता है अतएव मत्त की तरह झूमते हुए शरीर से विलास करता है ।।३९।।

(मूल) जहाँ ग्यारह अक्षर वाले पाद में आदि के दोनों और पाचवाँ आठवाँ तथा अन्तिम अक्षर गुरु हों और बाकी के ह्रस्व हों वह मोटक छन्द है ।।४०।।

(मूल) मेघ के ध्वनि के समान ध्वनि करने वाला, और जिसकी गति में मत्त की तरह स्खलन एवं मन्दता है ऐसा यह हाथी पहाड़ की चोटी में घन के गर्जन को सुनकर वृक्षों का प्रतिमोटन करता है ।।४१।।

(मूल) जिस ग्यारह अक्षर के पाद में तृतीय षष्ठ सप्तम एवं नवम अक्षर लघु हो वह इन्द्रवज्रा है ।।४२।।

जो वृत्त दोधक दूध दूहने की तरह मन्द-मन्द गाया जाता हो वह दोधक वृत्त कहलाता है ।।३९।।

**बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः।**
**इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः ॥**

### अभिनवभारती

प्रत्यक्षेऽर्थे दैववशाद् वृत्तिर्यस्य स व्याहारः विविधोऽर्थोऽभिनीयते येन। यथा "उद्दामोत्कलिकां" (रत्ना-२) इत्यादि।

संरम्भसंभ्रमयुतमिति संरम्भेणाकृतिविशेषेण यः संभ्रम आवेगः तद्युक्तं यद्विरुद्धं वस्तु यदनेन कृतं पूर्वोक्तवस्त्वपवदनमेव च तद्वचनं दृष्टार्थगर्भत्वात्। गण्ड इव गण्डः। ईषदसमाप्तं वचनं बहुवचनं तत्कृतेनाक्षेपेण कृतं स्वयं प्रतिवचनतां पूर्ववचनस्य गतमित्यर्थः। तथा च कोहलः—

वचसां सम्बद्धानामन्ते यत्स्यात्पदे त्वसंबन्धः।
संबद्धमिवाभाति हि तद्गण्डो नाम वीथ्यङ्गम् ॥

अनेनेषदसमाप्तिरेव दर्शिता। यथा दुर्योधनेन भानुमतीं प्रत्युच्यते—

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्याप्तमेव करभोरु! ममोरुयुग्मम् ॥ इति (वेणी)

तत्र प्रविश्य कञ्चुकी

भग्नं भीमेन मरुता भवतो रथकेतनम् ॥ इति।

तत्रोरुग्ममितियुपूर्वविश्रान्तमपि भग्नमित्यत्र संबन्धयोग्यं जातम्।

### बालक्रीड़ा

(मूल) इस प्रकार हे विप्रो ! मैंने लक्षण के अनुसार दशरूपकों के सम्पूर्ण विधान को कह दिया है। अब इनकी सन्धियों की विधि के विषय में शरीरगत लक्षण को कहूँगा ॥१२६॥

प्रत्यक्ष वृत्ति। यहाँ प्रत्यक्ष शब्द भावी प्रत्यक्ष को कहता है। अतः यह अर्थ है। आगामी प्रत्यक्ष अर्थ में दैववशात् जिसकी वृत्ति हो वह व्याहार है व्याहार माने जिससे विविध अर्थ आहरणीय हो, अभिनेय हो। जैसे—उद्दामोत्कलिकाम् इत्यादि है।१२५।

संरम्भसंभ्रमयुतम्। संरम्भ से आकृतिविशेष से जो सम्भ्रम है आवेग है उससे युक्त जो विरुद्ध वस्तु जो इसने किया वह पूर्वोक्त वस्तु का अपवदन है कथन है क्योंकि पहले देखे हुए अर्थ से गर्भित है। गण्ड की तरह जो हो वह गण्ड है। यहाँ बहुवचन का अर्थ करते हैं जो वचन ईषदसमाप्त है। ऐसे बहु वचन से कृत जो आक्षेप उससे कृत है अर्थात् स्वयं पूर्ववचन प्रतिवचनता को गत हो, प्राप्त हो। जैसा कि कोहल ने कहा है—

बहुत से सम्बद्ध पदों के अन्त में जो पद है उसमें नहीं बनने वाला सम्बन्ध सम्बन्ध जैसा जहाँ मालूम पड़े उसे जानकार लोग गण्ड नामक वीथी का अङ्ग कहते हैं। इससे ईषदसमाप्ति दिखाई गई।

अभिनवभारती

एतैः त्रयोदशभिरङ्गैर्युक्ता वीथी, तस्याश्च सर्वरसत्वस्याभिधानात् पर्यायेण रसानां प्राधान्यादुत्तमो मध्यमोऽधमो वा नायको भवत्येव। तथा च कोहलः—

उत्तमाधममध्याभिर्युक्ता प्रकृतिभिस्तथा।
एकहार्या द्विहार्या वा सा वीथीत्यभिसंज्ञिता ॥ इति ॥

अधमप्रकृतेस्तु न नायकत्वमिति ध्रुवं, तर्हि प्रहसनकभाणकादौ किं ब्रूयाः हास्यादिरस-प्रधानत्वे ह्यधम एव नायकः। कथाशरीरफलेन प्रधानतया संबध्यमानो नायक उच्यते। अनायकत्वेऽहि चास्याधमत्वं नानुपादेयं स्यात्। परिवारतया तस्यानुप्रवेशो ह्यनिवारित एव सर्वत्र।

अध्यायार्थमुपसंहरन् भाविनमर्थमनुसन्धत्ते इति दशरूपविधानमिति लक्षणत इत्यनेनेदमाह दशैव तानि लक्षणानि उदाहरणानां तु का गणना एतच्च पूर्वमेव दर्शितम्। तत्रैषां पुमर्थोपयोगो निजनिजलक्षणावसरे दर्शित एवेति पौनरुक्त्यं नाश्रीयत इति शिवम्।

बालक्रीड़ा

जैसे दुर्योधन भानुमती के प्रति कहता है कि हे करभोरु ! तुह्मारे जघन स्थल को चिरकाल तक बैठने के लिए मेरा ऊरुयुग पर्याप्त है।

उसी समय कञ्चुकी आकर कहता है कि भीम भयंकर वायु ने आप के रथ केतन को तोड़ दिया। यहां ऊरुयुग पूर्व में विश्रान्त हो गया है तब भी उसका ऊरु भग्न के साथ सम्बन्ध के योग्य हो गया है।

इन तरह अङ्गों से युक्ता वीथी है। इसमें सभी रसों का निरूपण किया जाता है ऐसा कहा है। अतः क्रमशः रसों के प्राधान्य के अनुसार उत्तम मध्यम एवं अधम नायक होता ही है। जैसा कि कोहल ने कहा।

उत्तम मध्यम एवं अधम प्रकृतियों से युक्ता तथा एक घण्टे में हार्य सम्पाद्य या दो घण्टे में हार्य सम्पाद्य जो हो उसकी वीथी यह संज्ञा है।

अगर कहें कि अधम प्रकृति वाला नायक नहीं होता है यह ध्रुव है तब प्रहसन एवं भाण में क्या कहोगे। इस वास्ते जहाँ हास्य रस की प्रधानता होगी वहां तो अधम ही नायक होता है। कथाशरीर इतिवृत्त एवं उसके फल से प्रधानतया सम्बध्यमान जो होता है वह नायक कहलाता है। नायक नहीं होने पर भी अधमत्व इसमें उपादेय है ही। अथ च नाट्य का अङ्ग होने से परिवार होने से सभी जगहों में उसका प्रवेश अनिवारित ही है उसको कौन रोक सकता है।

अट्ठारवें अध्याय के अर्थ का उपसंहार करते हुए भावी अध्याय के अर्थ का अनुसन्धान करते हैं इतिदशरूपविधानम्। लक्षणतः कहने का यह आशय है कि दश ही वे लक्षण हैं उदाहरणों की तो गणना ही क्या है। इसको तो पहले ही दिखा दिया है। उनमें अपने २ लक्षण कहने के अवसर में इनके साथ धर्मादि चतुर्विध पुरुषार्थों का उपयोग दिखा ही दिया

पुनरस्य शरीरगतं संन्धिविधौ लक्षणं वक्ष्ये ॥१२६॥

इति भरतीये नाट्यशास्त्रे दशरूपनिरूपणं नामाध्यायोऽष्टादशः समाप्तः ।

अभिनवभारती

इति विमलशिशिरदीधितिकलितशिरोमण्डनाङ्घ्रिदास्यचणः ।
अभिनवगुप्तो गुप्तं दशस्वरूपं सतत्त्वकं व्यवृणोत् ॥

इति श्रीमन्महामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृतावभिनवभारत्यां दशरूपकविधानं नामाष्टादशोऽध्यायः समाप्तः ॥

मधुसूदनी

प्रासूत रामो विदुषां वरेण्यो वक्तावरी श्रीमधुसूदनं यम्
अष्टादशाध्यायगता व्यरंसीत्तस्यार्थशुद्धा मधुसूदनीयम् ।

इति श्रीमधुसूदनशास्त्रिणः कृता अभिनवभारत्या मधुसूदनी
विवृता अष्टादशोऽध्यायः परिपूर्णतामियात् ।

बालक्रीड़ा

इति नाटचशास्त्र के मूल की अट्ठारहवें अध्याय की श्रीमधुसूदनशास्त्री की कृति हिन्दी टीका बालक्रीड़ा समाप्त हुई ।

है अतः पुनरुक्ति का आश्रयण नहीं करते है । अर्थात् कहे हुए को पुनः नहीं कहते हैं । इति शिवम् । यह अध्याय की समाप्ति कालिक मङ्गल है ।

इस प्रकार विमल एवं शिशिर दीधिति किरणों वाले चन्द्र से कलित होगया है शिरो मण्डन जिसका ऐसे चन्द्रशेखर के अङ्घ्रियों की दासता करने से प्रसिद्ध अभिनव गुप्त ने दशरूपक के छिपे हुए तत्त्वों का विवरण किया ।

इस प्रकार आचार्य श्रीमधुसूदनशास्त्री की बनाई हुई भरत के नाटचशास्त्र की अभिनवभारती के अट्ठारहवें अध्याय की हिन्दी टीका बालक्रीड़ा सम्पूर्ण हुई। ओम् शम् ।

---

## व्याख्यातृस्मृता ग्रन्था ग्रन्थकर्तारश्च

अध्र्वहर:
अमरुककाव्यम्
आनन्दवर्धनः
उद्भटः
उपाध्यायाः
कात्यायनः
कामसूत्रम्
कुमारसम्भवः
कृत्यारावणम्
कोहलः
गोपालः
घण्टकः
चन्द्रगुप्तः
चाणक्यशास्त्रम्
जयदेवः
तापसवत्सराजम्
दुःखलात्मजः
देवीचन्द्रगुप्तम्
नाकुलम्
नागानन्दम्
नृत्तपारः
पाण्डवानन्दम्
पुष्पदूषितकम्
प्रतिज्ञाचाणक्यम्
प्रतिभाचाणक्यम्
बालरामायणम्
बिन्दुसारः
बृहत्कथा
ब्रह्मयशः स्वामी
भट्टनायकः
भट्टेन्दुराजः
भर्तृमित्रः
भामहः
भीमः
मायापुष्पकम्
मालतीमाधवम्
मुद्राराक्षसम्
मुनित्रयम्
रघुवंशः
रत्नावली
रविः
राजशेखरः
रामाभ्युदयम्
लोल्लटः
विक्रमोर्वशी
विद्धसालभञ्जिका
वृद्धाः
वेणीसंहारः
शकलीगर्भः
शङ्कुकः
शाकुन्तलम्
संग्रहः

———